आपमं १,१२, २[a]; वौगृ १,७, ३९[a]; २,१८,२[a]; हिगृ १, २५, १[a]; गोगृ १,३,३[b]; द्रागृ १, २, १८[b]; –ती †आश्रौ २,८,२; ३; ११, २-४××; शांश्रौ; वौश्रौ १३,१५:१; १६:५; ८; १०; १६, १६:८××; अप ४८, १०२†; वाध २९,१९; विध ९९,४; बृदे १, १२८; २, ७४; ७६; ३, १३; शुअ ४, १८२; †निघ १, ११; या २, २३; ११, २५; याशि १, ३३; –तीः आपमं २, ११, १८†; –तीम् †आश्रौ २,११,४; ३,९,३; ८, ११, १; १२, ६, ३§; शांश्रौ ६, १०,२†××; १३, २९,१५; काश्रौ १३, ३, २६†[c]; आपश्रौ १२, २०, ४; २१, २०, ३†[c]; वौश्रौ १३, ३१:२××; माश्रौ ५,१,६, २४; वाधूश्रौ ३, ४२:४××; वैश्रौ १५, २३:१४; हिश्रौ ८,५,३५; १६,६,४१†[c]; पागृ; वैगृ २, ६ : १८; अप ४२, २, ४; शंध ११६ : ३०; बृदे २, ५१; ८१; ४,३६; ३९; ६, २२; २३; ५९; १४५; अअ ७,१२; –†०ते आग्निगृ १,१,१ : ४०[b]; ५, १ : ३२××; आपगृ; –†त्यः अप ४८, ७६; निघ १, १३; –त्या हिश्रौ १७, ८, ८; चाअ; –त्याः आश्रौ १२,६, २; शांश्रौ १३,२९,१; आपश्रौ ४, १०,१;६; २३, १२, २३; २५, १२, ५; वौश्रौ ३,१२ : २७†; २०, १३ : २५××; २८,२:३०; वाश्रौ ३,२,५,४३†[c]; वैश्रौ १, १७:११; लाश्रौ १०,१५,१; १७, ११; वैताश्रौ ३४, ९†[c]; बृदे ६, २४; शुअ २, ३६२; चाअ ४० : १०; १४; अअ ५, ७; –त्याम् काश्रौ २४, ६, २१; लाश्रौ १०, १७, १०; १८, १३; विध ८५, २७; –त्यै आश्रौ ३, १, १४†[२]; ४,१३,२; शांश्रौ २,४,२; ३,९, २××; ९,२४, ५; १५,१४, ४; काश्रौ ३,७,१५†; ४,५, २१; ९, १, १५; ७,५××; १९, ४, १४†[d]; आपश्रौ ३, १६, ५;५, २३,५××; १९,१,५;१७;६,६; वौश्रौ २, २१ : ९××; १२, २ : ६; १६,२३ : ५†[c]; २९ : ८; ३० : १; १७, ४७ : ७; ५३ : ९; २८, २ : १४; भाश्रौ ५,१५, १०××; माश्रौ १,५,६, १९××; ५,२,११,१८[३]; वाधूश्रौ; वाश्रौ १, ४,४,४३; ३,३,१,१४; वैश्रौ १, १७ : ९; ११, १ : ७; २ : ११; १५,४ : ५; हिश्रौ ३,५,२२; ८, १,५०; १३,३,२६; ८,४; १५; २३,१,१५; वैताश्रौ ८,२; १८, ५; ऋअ २, १, १६४; शुअ २,३३१†[d]; –त्यौ शुअ ४,५.

सारस्वत[e]– -तः शांश्रौ ६, ११,८[f]; १०, १,१८; काश्रौ; –तम् शांश्रौ १७, ८, १०; काश्रौ १९, २, १९; ३, १४; २०; २५, २, १०; आपश्रौ; वौश्रौ २६,१२ : ६[g]; निसू १०, १० : २; अप ६८, १, ५४[h]; –तस्य शांश्रौ ६, १०, २; आपश्रौ १८, २, १७; ६, ९; १०××; वौश्रौ; चाअ १४ : ५; –ताः वौश्रौ २४, ३८ : ३; कौसू ८१, ३८; –तात् आपश्रौ २४,४,९; वैश्रौ १८,१ : ५; हिश्रौ; –तान् अप ५६, १, ८[i]; –तानाम् शांश्रौ १३,२९,१; वौश्रौ; –तानि आश्रौ १२, ६, १; शांश्रौ ११, ७, ५; काश्रौ २४, ५, २५; ६, १४; आपश्रौ; –ताभ्याम् वौश्रौ १७, ४७ : १२; –ताय लाश्रौ १०, १५, १; –ते काश्रौ २४, ४, २७; वौश्रौ; –तेन काश्रौ १९,१,२४; वौश्रौ १६,२९ : ५; २६,२ : ७; वाश्रौ; आग्निगृ २,७,४ : १७[j]; –तेषु आपश्रौ १९, १५, ७; हिश्रौ; –तौ आश्रौ ३,१२, २३†; आपश्रौ ५,११, ६†××; वौश्रौ २, २१ : ५××; २०, १८ : ३२[j]; ३४[j]××; भाश्रौ; वैश्रौ १,१७ : ७[j]; हिश्रौ २, ५, ४३[j].

सारस्वती- -ती आश्रौ ५, ३, ३; शांश्रौ; –तीः काश्रौ १५, ४, २५; ३६; आपश्रौ १८,२०,२३; वौश्रौ १२, ८ : १६; –तीनाम् वौश्रौ १२, ८ : २५; २२, १८ : ११; –तीम्

---

*a*) पाभे. वैप १ सरस्वती-> -०ति ऋ १०, १८४, २ टि. द्र. । *b*) सपा. °स्वति<>°स्वते इति पाभे. । *c*) परस्परं पाभे. । *d*) = सपा. मा २०, ३ तैब्रा २,६, ५,२ । मै ३, ११, ८ °त्याः इति पाभे. । *e*) विप., नाप. (सत्र-, होम- प्रभृ.) । *f*) पाठः ? °तस्य इति शोधः (तु. शांश्रौ ६, १०,२; C. च; वैतु. भाष्यम् सरस्-वत्->[प१]-वतः इति) । *g*) °तम् अयनम् >सरस्वतामयनम्, सारस्वतायनम् इति मूको. । *h*) अर्थः ? । *i*) = देश-विशेष- । *j*) = होम-विशेष- ।

आपश्रौ ७,१२, ३××; काश्रौसं; -तीपु आपश्रौ १८, १३, १; हिश्रौ १३, ५, ११; -त्यः आपश्रौ २०, १४, ७†; बौश्रौ १२, ८ : ४; वाश्रौ; -त्याम् आश्रौ ९,४, ६; शांश्रौ ७, १०, ८; हिश्रौ; -त्यै बौश्रौ ११, ५ : १४; -त्यौ अश्र ५, ७.

सारस्वत्य(ती-अ)न्त- -न्तान् आपश्रौ १८, २, १४; हिश्रौ १३, १, २३; -न्तानाम् आपश्रौ १८,६,१४; हिश्रौ १३,२,२७.

सारस्वत-पौष्ण- -ष्णयोः बौश्रौ ५, १ : २६; -ष्णाभ्याम् बौश्रौ ५,१ : २०; -ष्णौ शांश्रौ ३,१३,८.

सारस्वत-पौष्ण-मैत्र-क्षेत्रपत्य-वारुणा(ण-आ)दित्य- -त्याः काश्रौ १५,९,९.

सारस्वत-प्रभृति- -तिभिः वाश्रौ ३, १, २, ४२; -तीन् आपश्रौ १०, २, १५; १८,६,७; हिश्रौ १३, १, २३; २,२२; -तीनाम् आपश्रौ १८, ७,१०; हिश्रौ १३,२,३४.

सारस्वत-प्रमुख- -खेपु वैश्रौ १७, १६ : ४.

सारस्वत-मेष-मुख[a]- -खान् वैश्रौ १७,१०: ६.

सारस्वत-वैष्णव- -वौ वौश्रौ १६, १६ : ७; १२; वाश्रौ ३, २, ५, २२.

सारस्वता(त-आ)दि- -दिभिः वृदे ७, ५९; -दीन् वैश्रौ १७,१० : ७; -दीनाम् वैश्रौ १७,१८ : ५.

सरस्वती(ती-इ)डा-भारती- -त्यः ऋअ २,१,१३.

सरस्वती-दृषद्वती- -त्योः लाश्रौ १०,१९,४.

सरस्वती-देव(ता>)त- -तान् माश्रौ ५,१५,१४.

सरस्वती-देवता- >°व(त्य>)त्या- -त्याः अश्र १८,१.

सरस्वती-परिसर्पण- -णस्य आश्रौ १२,६,२२.

सरस्वती-प्रभृति- -तीनाम् वाश्रौ ३,१,२,२८.

सरस्वती-वत्- -वते माश्रौ २,३,२,२.

सरस्वती-विनशन[b]- -ने काश्रौ २४,५,३०.

**१स°-रस,सा-** -सः आपश्रौ १३, २३, १५†; -सम् आगृ ३, २, २; आग्निगृ २,६, ४ : ५; -साः वैश्रौ १६,२२ : २; हिश्रौ १, २, ६१†; -सान् काश्रौ ९, ५, ६; वाश्रौ ३,२,३,३२.

**२सरस-**(>१सारसायन-, सारसेय- पा.) पाग ४,२,८०[c].

**३सरस[d]-**(>२सरसी- पा.) पाग ४, १,४१.

**१सरसी-,सरस्य-** १सरस्- द्र.

**†?सरस्यक-** -काः आपमं २,१६, ७; भागृ २,७ : १९; हिगृ २, ७,२.

**सरस्वती-** २सरस्- द्र.

**स°-रहस्य,स्या-** -स्यम् चव्यू ३ : १६; -स्यान् विध १, ६२;६३; -स्याम् याशि १,३२.

**स°-राजन्-** -जानः काश्रौ २२, ५, २९; ११,८.

**†स°-राति[f]-** -तयः शांश्रौ १५,२७,१.

**स°-रात्रि-** पा ६,३,८५.

**†?सरान्तितेवतेवसु** अप ३६,९, २.

**स°-राष्ट्र-** -ष्ट्रम् अप ४, ३, ३; ७०[२],१९,६.

**सरित्[f]-** पाउ १,९७; -रित् निसू १, ५:५[g]; चाअ १६:२६†; -रितः आपश्रौ ५,६,३†[h]; †१४, १७, १[h]; २८ : ४[i]; १७, ७, १[j]; १८,१†; बौश्रौ; वैश्रौ १९, ५ : ३५[j]; २१, १५ : १२[i]†; हिश्रौ ३, २, ५५†[h]; १२, २, २१[j]; †१५, ५, १[h]; ७, १२[i]; -रितम् अप ४३,६, १; -रिताम् अप ४२,१,४; ६४,९,४; चाअ ४० : १; -रित्सु अप ४२, १, २; -रिद्भिः माशि १६,१०.

सरित्-पति- -तेः आग्निगृ २,७,५ : १४.

सरित्-सर-वनान्त- -न्तेपु अप ६८, १,१७.

सरित्-सर-समुद्र- -द्राणाम् अप ६८,२,३६.

सरिद्-व(र>)रा[k]- -रासु विध ८५,५४; ९९,१६.

**सरिर[f]-** पाउभो २,३,४७; पावाग ८, २,१८[l]; -रम् अप ४८,६६†[m]; -†रस्य आपश्रौ ५, १,७;२,४; १६,१२,११[n]; हिश्रौ ११,५,७[n]; आग्निगृ २, ५, ३ : १८; वौगृ ३,

---

a) कस. >वस. । b) पृ २२२२ I द्र. । c) =४स- । d) =१सरस्- । तु. पागम. । e) =३स- । f) वैप १ द्र. । g) =छन्दो-विशेष- । h) पाभे. वैप १ हरितः काठ ३५,१ टि. द्र. । i) पाभे. वैप १ सलिलाः काठ ३५,९ टि. द्र. । j) =इष्टका-विशेष- । k) उप. =२वर- । l) तु. पागम. । m) बहु-नामन्- । n) पाभे. वैप १ सरिरस्य मा १७,८७ टि. द्र. ।

७,१५.

सरिण्यत्- √सृ द्र.

सरीसृप-, °पत्- √सृप् द्र.

स[a]-रुक्म- -क्मम् लाश्रौ ८,११,२२; -क्मे काश्रौ १४,५,१५.

स[a]-रुधिर->°र-पांसु-वर्ष- मिश्र- -श्राः अप५१,४,१;५,२.

स-रूप,पा[b]- पा ६,३, ८५; -पयोः सु ५,३; -पाणाम् पा,पावा १, २,६४; -पाणि बौश्रौ २५,१३: १९; -पाम् आमिगृ २, ५, ३ : २३; बौगृ ३,७, १७; -पे ऋप्रा १७,४१; पा २,२,२७.

सारूप्य- -प्यम् आपध २,२४, २; हिध २,५,१६७; मीसू १, ४,२५.

सरूप-ता- -ताम् या १४,२९;३७.

सरूप-त्व- -त्वात् पावा १,२, ६४; -त्वाय बौश्रौ १३,४२:५†.

सरूप-व(त्स>)त्सा[c]- -त्सायाः आगृ १, १३, २; शांगृ ५,५,७; कौसू १२,२; ३५,४.

सारूपवत्स[d]- -त्सम् वैताश्रौ १२,१४; कौसू ११, २०; १६, २८; ४६, ४; -त्सस्य कौसू ५०, १४; ५१, २; -त्से कौसू ७,२;१९,१९;२०,२५; -त्सेन कौसू ३९,१३.

†स[a]-रेतस्- -तसः आपश्रौ २१, ९, १५; हिश्रौ १६,४, १३; -तसा आपमं १,११,७.

स[a]-रेफ- -फः आशि १,२६; -फयोः ऋप्रा १४,२४; -फौ ऋप्रा १४, ३८.

सरोज- प्रमृ. १सरस्- द्र.

स[a]-रोमन्- -माणम् वैगृ २, ५ : ६; ३,२३ : १०.

सरोरुह- प्रभृ. १सरस्- द्र.

स(स[a]-ऋ)र्क्[e]- -र्के शुअ १,१.

सर्ग- √सृज् द्र.

स(स[a]-ऋ)र्च- -र्चेन गोगृ ३,९,६.

√सर्ज् पाधा. भ्वा. पर. अर्जने.

?सर्जत् वाश्रौ २,१,३,३०.

सर्जू- पाउ १,८०.

†सर्णीक[f]- -कम् अप ४८, ७५; निघ १,१२; -काय[g] बौश्रौ १०, ४५ : २७; वैश्रौ १९, ५ : २१; हिश्रौ १२,२, ४; ७, १९; २६.

सर्तवै प्रमृ. √सृ द्र.

?सर्तृका- -का या १४,३०.

सर्दिगृदि[f]- -दिम् बौश्रौ १५, २९ : ३८†.

१सर्प,र्पा[f]- पाउभो २, २, २०७; पाग ३, १; १३४; -र्पः वैताश्रौ २९, १०†; आगृ २,१, १०†; आमिगृ २, ५, २ : ५; बौगृ; वेज्यो १०; -र्पम् अप ६८,२, ५४; ७१, ५,५; विध ५०, ३४; अअ १२,१†; -र्पस्य याशि १, ७४; -र्पाः आश्रौ १०, ७, ५[२]; शांश्रौ; सु ८,२;९,३××; वेज्यो ३२; -†°र्पाः आगृ ४,८,२७; २८; -र्पाणाम् आपश्रौ १०,२६, १४†; बौश्रौ ६,१५:१३†; १७, १८ : ७; भाश्रौ; -र्पान् शांश्रौ १६, २, १४; आपश्रौ ६, १२, ४[२]†;बौश्रौ; सु ७,५;१०,३; -र्पे गौध २२,२७; -र्पेण वैगृ ७,४ : ११; -र्पेभ्यः †आपश्रौ ६, १२,४; १६, २२,४; २७, २२; बौश्रौ.

सार्प[h]- -र्पम् शुअ २, १४३; -र्पे विध ७८, १४[i].

सर्प-द(ष्ट>)ष्टा- -ष्टाम् हिश्रौ १०, ३,९.

सर्पदष्ट-मृत- -तानाम् बौपि २, ८,२.

सर्प-देवजन- -नान् आपश्रौ ६,१२, ४†[j]; वाश्रौ १, ५,२,५०; हिश्रौ ३, ७, ९९†[j]; पागृ ३, ४, ८; -†नेभ्यः शांश्रौ ६,२,२[k]; वाश्रौ १,५,२, ५०; आगृ २, १, ९[l]; १४; बौगृ.

सर्प-देवता- > °त्य- > त्या- -त्याः अप १, ४,२.

सर्प-नामन्- -मभिः माश्रौ ६,१,७, ४;८,३; हिश्रौ ११,७,२२.

सर्प-पिपीलिका- -काभ्यः माश्रौ १,६,१,४८†.

†सर्प-पुण्यजन- -नान्[l] वैताश्रौ ७, २२; अप ४५,२,९.

सर्प-बलि- -लिः बौगृ ३,१०,१;८; -लिम् मागृ २,१६,३; ५; -लौ बौगृ ३,११,१.

सर्प-मातृ- -०तः सु ६,४.

सर्प-राज- -जः गोगृ ३, ७, १३†; -जस्य चाअ २:१०; १६ :२०; ३०:२५.

सर्प राजन्->सर्पराज्ञी[f]- -ज्ञियः आपश्रौ ५, १२, १[m]; -ज्ञियाः बौश्रौ १४,२७ : १०; २०, १९: ३; २४, १९ : १; -ज्ञी भाशि

---

a) =४स-। b) =सु-रूप- (तु. वैप १)। c) वस.। d) विप. (पयस्-)। e) उप. ऋच्-+ समासान्तः कप् प्र.। f) वैप १ द्र.। g) पाभे. वैप १ सुर्णीकाय टि. द्र.। h) नाप. ([सर्पदेवत्य-] तृच-, आश्लेषा-नक्षत्र-)। i) सर्पे इति जीसं.। j) परस्परं पाभे.। k) पाभे. वैप १,१६१७ l द्र.। l) = सपा. आश्रौ २,४,१२ [आन.]। BI. BO. सर्वदे° इति। m) सपा. हिश्रौ ३,४,११ सार्प° इति पाभे.।

६†; –ज्ञीः आपश्रौ ५, १६, २; बौश्रौ ३,१ :१६; २४, १९ : २; –ज्ञीनाम् आपश्रौ १४, २२, १[a]; २१,१०, ५[b]; बौश्रौ १४, २७ : १३[a]; अप्राय ६, ७; –ज्ञीभिः आपश्रौ ५,१३,८[c];१५,६[c]; २७, ९[d]; १४, २१, १३[e]; माश्रौ ५, १९, ६[d]; वैश्रौ १, १९ : १५[d]; २१,८ : २[e]; –ज्ञीभ्याम् आपश्रौ ५, ११, ६[f]; माश्रौ ५, ७, २[c]; १८[c];१,४[c]; वैश्रौ १,११ : १०[c]; १२ : ८; १३ : ६; –ज्ञीम् वैश्रौ २१,८ : ४[a]; –ज्ञीषु बौश्रौ २०, १९ : २; वैश्रौ २१,९ : ६[e].

१सार्पराज्ञ[g]–> °ज्ञी[h]– -ज्ञियः हिश्रौ ३. ४, ११[i]; –ज्ञी वाश्रौ ३,४,२,२२[j]; ३, ७; २२; ऋअ २,१०,१८९; बृदे २, ८४; ८, ८९; –ज्ञीः शांश्रौ १०,१३,२६; १२, ११, ५; साअ १, ६३१-६३३; –ज्ञीनाम् हिश्रौ १५, ५, ३५[a]; १६, ४, २३[b]; –ज्ञीभिः शांश्रौ १२,११,२[c]; काश्रौ ४,९, १६; वाश्रौ १,५,१,८; हिश्रौ ३, ६,१०[d];१५,५,३४[e]; –ज्ञीभ्याम् हिश्रौ ३, ४, १[f]; २२[c]; ३८[c]; –ज्ञीषु काश्रौ २५, ६,५, १३; माश्रौ ३, ८, ४[e]; क्षुसू १३,३१; –ज्ञ्यः निसू ४,९:५. १,११ : ६;–ज्ञ्यः निसू ४,९:५.

२सार्पराज्ञ[k]– -ज्ञः शुअ १,१७१; चाअ ८ : ६; –ज्ञम् लाश्रौ १०, १०,१; क्षुसू २,१५ : ३५; ३,२: ३२; –ज्ञे निसू ४,९ : २८;११ : ९; –ज्ञेन क्षुसू ३,२ : ३०.

सर्प-वत् अप ५८[2],२,७.

सर्प-वराह-मण्डूक-वध- -धे सुध २८.

सर्प-विद्[l]– -विदः आश्रौ १०, ७, ५; शांश्रौ १६,२,१४.

सर्प-विद्या- -द्या,-द्याम् शांश्रौ १६, २,१५†[m].

सर्प-वेद[n]– -दान् बौध २,५, २७.

सर्प-शस्त्र[o]– -स्त्रैः विध ७१,७८.

सर्प-शिरस्- -रः आपश्रौ १६, १३, १०; २७, २२; बौश्रौ; –रसः बौश्रौ २२,६ : २२.

१सर्प-शीर्ष->°र्षिन्[p]– -र्षी आपध १,१७,३९[q].

२सर्प-शीर्ष[r]– -र्षाः वाध १४, ४२; चाअ १६ : २१[s].

सर्प-शीर्षिन्[r]– -र्षा हिध १,५,७०[q].

सर्प-सत्र- -त्रम् काश्रौ २४,४,४८; –त्रस्य शांश्रौ १३, २३,८; –त्रे निसू १०, १२ : १; –त्रेण हिश्रौ १८,४,६१[t,u].

†सर्प-सद्- -सदे हिगृ१,१६,१०[2v].

सर्प-समिति[w]– -तौ अप ७२, ३,२.

सर्प-सामन्- -मानि निसू १०, १२ : १९; २०.

†सर्प-सूत- -सूते भागृ २, २९: १४[2v].

सर्प-स्तुति[x]– -तौ भागृ २, २९:१३.

सर्प-सृप्त- -से हिगृ १, १६,१०.

सर्पाणां-सत्र- -त्रेण आपश्रौ २३, १४,८[u].

सर्पाणाम्-अयन- -नम् आश्रौ १२, ५,१; बौश्रौ २६,२४ : १७.

सर्पा(र्प-२आ)घ[y]– -घे काग्र ३, ६, १०.

सर्पा(र्प-अ)र्घ[y]– -र्घे वैज्यो ७.

सर्पा(र्प-आ)हुति[z]– -तिः आग्निगृ २, ५, ३ : ४६; वौगृ ३,७,२८; –तीः आपश्रौ १७,२०,१४;१५; बौश्रौ १०,४९:५; २५,३०:१६; वैश्रौ १९,६:१३३; हिश्रौ १२, ६,२२; भागृ २,१ : १०.

†सर्पे(र्प-इ)तरजन- -नान् आपश्रौ ६,१२,४; माश्रौ ६, १३, १०; वैताश्रौ; –नेभ्यः कौसू ४२,१२.

२सर्प[a1]– -र्पः ऋअ २, १०, ७६;९४; साअ १,६३१-६३३.

सर्पण-, सर्पत्-, सर्पिन्- √सृप् द्र.

सर्पिस्[b1]– पाउ २,१०८; पाग ५, ४, १५१; फि २६; –र्पिः आश्रौ २,३,२; ६,१० शांश्रौ; निघ १, १२†[c1]; या ६, १७; –र्पिषः †आश्रौ ७,८,१[d1]; ८,१२,५[d1]; बौश्रौ १२, २५ : २०†[d1]; १८, ३२ : १०;११; माश्रौ; –र्पिषा शांश्रौ४,१५,२२;१६,६; काश्रौ;

---

*a*) परस्परं पाभे.। *b*) परस्परं पाभे.। *c*) परस्परं पाभे.। *d*) परस्परं पाभे.। *e*) परस्परं पाभे.। *f*) परस्परं पाभे.। *g*) स्वार्थे अण् प्र. (तु. हिश्रौ. भाष्यम्)। *h*) = सर्पराज्ञी-। *i*) पाभे. पृ २५९६ m द्र.। *j*) °ज्ञीः इति मूको.। *k*) विप. (तृच-), नाप. (सामन्-)। तेन दृष्टीयः अण् प्र.। *l*) उप.<√विद् (ज्ञाने)। *m*) पाभे. पृ २२७१ g द्र.। *n*) सर्व° इति मैसू.। *o*) द्वस. उप. = २शस्त्र-। *p*) = मत्स्य-विशेष-। *q*) परस्परं पाभे.। *r*) बस.। *s*) =[उपचारात्] मन्त्र-विशेष-। *t*) सर्व° इति पाठः? यनि. शोधः (तु. सपा. आपश्रौ २३,१४,८)। *u*) परस्परं पाभे.। *v*) परस्परं पाभे.। *w*) उप. <सम् √इ। *x*) मलो. कस.। *y*) पूप. = आश्लेषा-नक्षत्र-। *z*) = मन्त्र-विशेष- (तु. तै ५, ५,१०), आहुति-विशेष- वा। *a1*) = ऋषि-विशेष-। *b1*) वैप १ द्र.। *c1*) = १उदक-। *d1*) पाभे. वैप १ विश्पतें मै २,१३,५ टि. द्र.।

-र्पिंषि बौश्रौ १८, ३२ : १२; माश्रौ १, ५, १, २२; ४, ७, ३; वाश्रौ; -र्पींषि आश्रौ ११, ६,३; लाश्रौ १०,४,१०.
सर्पिः-क्षीर-गन्धोदक- -कैः अप ४०,१,९.
†सर्पिर्-आसुति[a]- -तिः आपश्रौ १६, ९, ६; बौश्रौ १०, १३ : २२; माश्रौ ६,१,३,२८.
सर्पिर्-आसेचन- -नम् बौश्रौ २, १४ : ४; ५, १० : १०××;-ने बौश्रौ १५,४ : ५.
सर्पिर्-ग्री(व>)वी[a]- -वी आग्निगृ २,३,५ : २४†.
सर्पिर्-दधि-मध्व (धु-अ) क्त- -क्तानाम् अप ३६,६, १.
सर्पिर्दधिमध्वक्त-पत्र- -त्राणाम् अप ३५,२,५.
सर्पिर्-धान[b]- -नस्य आपश्रौ २,६, १; भाश्रौ २,५,१२; वैश्रौ.
सर्पिर्-मधु- पाग २, २, ३१; ४, १४; -धुनी आगृ १, १५, १; कौगृ १,१६,४; शांगृ; -धुभ्याम् द्राश्रौ ९, २, ९; लाश्रौ ३,६,८; कौसू ८६, २.
सर्पिर्मधु-मिश्र- -श्राः अशां १२, ५.
सर्पिर्-मिश्र,श्रा- -श्रम् आपश्रौ १०,६,७; बौश्रौ; -श्रस्य बौश्रौ २,१२:२८××; आग्निगृ; -श्राः कौसू १०, १०; -श्रेण आग्निगृ ३, ५. ७ : १; १७; वौपि.
सर्पिर्-युक्त- -क्तम् शंध २३१.
सर्पिः-शेष- -षम् हिश्रौ ३,२,४७.
सर्पिष्-कुण्डिका- पा,पाग ८,३,४८
सर्पिष्-कुम्भ- -म्भाः बौश्रौ १८, ४४ : १२.
सर्पिष्-पात्र- -त्रान् बौश्रौ १८,४० : १५; -त्रैः बौश्रौ १८, ४० : २३; २६.
सर्पिष्-मत्- -मत् आपश्रौ २२, २, १५; माश्रौ १,४,१,५; वाधूश्रौ; -मता आपगृ ७, १५; ९, ४; बौगृ २, ६, २५; आपध; -मति माश्रौ १, ५, १, २४; -मन्तम् हिश्रौ १३, १, ३९; आग्निगृ २, २, ५ : २०†; हिगृ २, ६,१४.
सर्पिष्-वत्- -वान् बौश्रौ १४,१८ : २९.
सर्पिस्-सूत्रे(त्र-इ)न्धन--प्रद्यो-तित- -तम् वौगृ १,६, २२.
सर्पेतरजन- १सर्प- द्र.
√सर्व् पाधा. भ्वा. पर. गतौ.
सर्याण[c]- (> °णा-वत्- पा.) पाग ४,२,८६.
√सर्व् पाधा. भ्वा. पर. हिंसायाम्.
सर्व,र्वा[a]- शुप्रा २, ३९; पाउ १, १५३; पाग १,१,२७; -र्व[d] अप ४७,३,१; -०र्व आग्निगृ १, ५, ५ : ६; विध १,५५[e]; -र्वः आश्रौ ७,२,७; शांश्रौ; याशि १, ८२[f]; -र्वम् आश्रौ १,११,६[2]××; ११, ६, १२[g]; शांश्रौ; आपश्रौ ५, १६,१†[h]; ७,९,९†[i]; १४, १, १०[j]; १८, १†[k]; १५,१३,२[l]; आग्निगृ २, १,४ : १८†[m]; अप ४८,७५†[n]; निघ १,१२†[n]; या २,२४♃; -र्वम्ऽ-र्वम् शांश्रौ २, १०,२; द्राश्रौ १,२,९; लाश्रौ १, २, ५; -र्वया बौश्रौ २१, ८ : ३०; -र्वस्मात् आश्रौ २,२,३†; शांश्रौ; आपश्रौ ७, २१, ६†[o]; बौश्रौ ४,७ : २५†[o]; भाश्रौ ७, १६,१३†[o]; हिश्रौ ४,४,४४†[o]; द्राश्रौ ४,२, २†[o]; लाश्रौ २, २, ११†[o]; -र्वस्मिन् शांश्रौ १८, २३, ७; काश्रौ २४, ४, २६; काठश्रौ;-†र्वस्मै शांश्रौ १२,१५, १; आपश्रौ २०, ८, ९; बौश्रौ; मागृ १, ९, २४[p]; वागृ १२, १[p]; -र्वस्य शांश्रौ ८, ९, १†; १४, २, ११; १५, १२, १६; काश्रौ; शांगृ ३, १३,५†[q]; पा १, १, ५५××; -र्वस्याः आपशु १३, १०; हिशु ४, ३७; -र्वस्याम् भाश्रौ १२, ६, ७; -र्वा आपश्रौ १४,३, १२; १७, २१, ८†; काश्रौसं; †अअ ४, २९?; १२, ५(५, ७); -र्वाः आश्रौ १, ३, १८; ५, ३०; २, १०, १८†[r]××; शांश्रौ; काश्रौ १३, ३, २६†[s]; आगृ २, ३, ३†[t]; कौगृ ४, ४, ९†[t]; शांगृ ४, १८,१†[t]; पागृ १, ५,९†[u]; २, १४,४†[t]; मागृ २, ७, १†[t];

a) वैप १ द्र. । b) उप. अधिकरणे कृत् । c) तु. पागम. । d) त्रुटितः पाठः । e) = विष्णु- । f) पाभे. पृ १८०१ e द्र. । g) तु. आन. । h) पाभे. वै१ १ विश्वम् ऋ १,९३,३ टि. द्र. । i) पाभे. वैप१, १४११ a द्र. । j) सप्र. वैश्रौ १५,२८ : ५ सर्वशः इति पाभे. । k) पाभे. वैप १,६९० k द्र. । l) सप्र. सर्वं परि°<>सर्वपरि° इति पाभे. । m) सपा. आपमं २,१३,१ दीर्घम् इति पाभे. । n) = १उदक- । o) पाभे. वैप १ विश्वस्मात् शौ ७, ११७, २ टि. द्र. । p) पाभे. पृ १८७३ l द्र. । q) पाभे. पृ २२५९ u द्र. । r) पाभे. पृ १०४ W द्र. । s) पाभे. पृ ३२८ g द्र. । t) पाभे. पृ ११९२ r द्र. । u) पाभे. वैप१,१६१४ c द्र. ।

या ३,४†[a]; पावा १,४,१०९[b]; -र्वाणि आश्रौ ७, १, १६; १२, १३; ८, ३, २२; शांश्रौ; माश्रौ १,४, ३, १†[c]; वाश्रौ १, १,४, ९†[c]; -र्वात् पावा ५, १, १०; -र्वान् आश्रौ २, ९, १०†[d]: ३, ११, १†; १२, २९××; शांश्रौ २, १३,६××; ८, १५, ११†[e]; कौसू ७४, २०†[f]; -र्वाभिः काश्रौ ७,७,११;१९,४,१५××; आपश्रौ; कौगृ ३,१५,५†[g]; शांगृ ३,१३,५†[g]; -र्वाभ्यः शांश्रौ ३, २०,२†; १४,५७,२०; आपश्रौ; हिगृ १, ६, ५†[h]; -र्वाम् आश्रौ १,१०,८; शांश्रौ ६,७, ७; १४, ५१, १[i]; आपश्रौ; -र्वाम्ऽ-र्वाम् वौश्रौ २०, १९ : १४; -र्वासाम् आश्रौ ६, ४, ४; शांश्रौ १, १२, १०××; काश्रौ; आपमं १, १६, ५†[i]; -र्वासु शांश्रौ १,१,३९; २, ३, १५××; काश्रौ; हिश्रौ ११,५,६†[j]; -र्वे आश्रौ १,१३, १०; २, १०, १८†××; शांश्रौ; दंवि २,११?;-र्वेण आश्रौ १२,४, २४; शांश्रौ १६,२,३५;८,४××; आपश्रौ; -र्वेणऽ-र्वेण वौश्रौ २०, ४ : २०; १० : १३; -†र्वेभिः आपश्रौ १३,१८,९; वैश्रौ १६, २२ : १३; -र्वेभ्यः आश्रौ २, ६, १७; ६, ६, १; काश्रौ; मागृ १,२२,५†[h]; कौसू ५६,१३†[h]; -र्वेषाम् आश्रौ १,३,५;३२; २, ९, ७××; शांश्रौ; हिश्रौ १६, १,२९†[k]; -र्वेषु आश्रौ २, १६, २६;३,२,१६××; शांश्रौ; -र्वैः आश्रौ ९,६,८;काश्रौ; आपश्रौ ९, १४,१†[l]××; वौश्रौ.

सार्व[m]- पा ५,१,१०.

सार्व-गामिन्[n]- -मी आपध १,२३,६; हिध १,६,१४.

सार्व-चिकीर्षा- -र्षा निसू ६,२ : ८.

सार्व-सुरभि[o]- -भि हिपि १७ : १९; -भिणा आपगृ १२, ८; भागृ २,२० : ३.

सार्वसुरभि-पिष्ट- -ष्टम् भागृ २,१८ : २[p].

सर्व-सह- पा ३,२,४१.

सर्व-कर्तृ- -र्तारम् शैशि ८.

१सर्व-कर्मन्- -र्म वैगृ ४, १४ : १८; मीसू ५,२,१; १०, १, १; १२, ३, ९; -र्मणः कप्र १, ३, ५; -र्मणाम् आश्रौ १, १२,३; शांश्रौ ४, ६, १०; अप; -र्मसु वैश्रौ १, १४ : ३; शांगृ १, २, ७; कप्र १,८,१९; अप; -र्माणि आश्रौ २, ६, ३; हिश्रौ ३, ७, १०; आग्निगृ.

सर्वकर्म-प्रत्यय- -यः मीसू २,४, ३२.

सर्वकर्म-फल- -लम् आज्यो १४, ७.

सर्वकर्म-वहिष्कार्य- -र्यः वैगृ ६, ११ : ७; वैध ३, १५,११.

सर्वकर्म-वहिष्कृत- -तः वैध ३, १४,७.

सर्वकर्म-वर्जित- -तः विध ५१,१.

सर्वकर्म-समृद्धि- -द्धिः वैगृ १, ७ : ५.

सर्वकर्मा(र्म-अ)र्थ-सिद्धि- -द्धये अप ३४, १, ५.

सर्वकर्मा(र्म-अ)र्ह- -र्हः आग्निगृ २,४,९ : २६[२].

सर्वकर्मीण- पा ५,२,७.

२सर्व-कर्मन्[o]- -र्मा कौसू ४५,१८.

†सर्व-कलि-कलुष[q]- -षम् अप ३६,१,६;११.

सर्व-क्लप- -प्ते वौश्रौ २०, २ : २; २४,११ : १३.

सर्व-कल्मष-नाशन- -नम् विध २३,६०.

सर्व-कल्मष-नाशि(न्>)नी- -नी शंध४४१; -नीम् अप६३,५,६[२];

१सर्व-काम- -मम् वौपि २, ९,५[r]. ११,२†; -माः अप २२,५, २; -मान् आग्निगृ ३,२,१ : २४†[r]; अप ३३, १, ११; ७०, ४, ८; विध ७८, ४९; -मानाम् विध ९२,१५; -माय माश्रौ ५, १, ५,२२;६९; आज्यो २, ९; -मैः आग्निगृ ३, ११, २ : ९†; अप १,४९, ८.

---

*a*) पाभे. वैप १ हिराः शौ १, १७, १ टि. द्र.। *b*) तु. पाम.। *c*) पाभे. वैप १, १९७६ j द्र.। *d*) पाभे. वैप २,३खं. सर्वम् मंत्रा २,१,१४ टि. द्र.। *e*) पाभे. वैप १ विश्वान् मा ३८,१० टि. द्र.। *f*) सर्वाङ् इति पाठः? यनि. शोधः [तु. आश्रौ २,९,१०]। *g*) पाभे. पृ १३८ c द्र.। *h*) परस्परं पाभे.। *i*) सपा. ऋ १०,१५९,५ अन्यासाम् इति पाभे.। *j*) पाभे. पृ ५९७ e द्र.। *k*) = सपा. माश ४,६,८,१५। काश्रौ १२,२,८ सह इति पाभे.।[a] *l*) पाभे. वैप १ सुर्वेण मा २६, १९ टि. द्र.। *m*) स्वार्थे तस्मैहितीयाद्यर्थे वा अण् प्र.। *n*) पूप. = आत्मन्- (तु. भाष्यम्)। MW. ?सर्वगा° इति। *o*) वस.। *p*) सप्र. वौश्रौ १७, ३९ : ३ प्रमृ. सर्वसु° इति पाभे.। *q*) कस.>षस.। *r*) परस्परं पाभे.।

सार्वकाम[a]- -मः आपश्रौ १४,१४,१३.
सार्वकामिक[b]- -कम् आश्रौ ११, २, ४; बौध ३,८,३८.
सार्वकामिकी- -की शांश्रौ ३,४, १०; बौश्रौ २३, १:३६.
सार्वकाम्य- -म्यम् मीसू ४, ३,२३.
सर्वकाम-द- -दम् अशां ५, १.
सर्वकाम-प्र(द>)दा- -दा शंध ४४१.
सर्वकाम-समृद्ध- -द्धः वाध २९, ८.
सर्वकामा(म-अ)नपराध- -धात् द्राश्रौ ९,४,२०.
सर्वकामा(म-अ)भय- -याय अप १, ४१, ४; ५; अशां ११,४;५.
सर्वकामा(म-अ)र्थ- -र्थम् वैश्रौ १,४:५.
सर्वकामार्थ-सिद्धि- -द्धये अप ३३, ३,१.
१सर्वकामिन्- -मिनम् शांश्रौ १६,१,१५[c]; १०,९[c]; -मी कौगृ ५,७,२.
सर्वकामीय- -यम् विध ७७,९.
२सर्व-काम[d]- -मः आपश्रौ ३, १४, ९; १०, २, १; वौश्रौ; -मम् वौगृ २, ५, ५; -मस्य शांश्रौ १४,५, ३; काश्रौ; -माः आश्रौ ११, ७, १; -माय कौसू ४५, १६†; -मौ हिश्रौ १,१,६६.
२सर्व-कामिन्- -मिनाम् मागृ २, १३, ६†; -मी आग्निगृ २, ४, ११:२५.
सर्व-कारण- -णम् अअ १, ३३; -णाय वैध ३,१०,४.
सर्व-कारिन्- -री मागृ १, १, २; वागृ ६,३.
सर्व-कारु- -रूणाम् अप १, ४४, १.
सर्व-कार्य- -र्याणि अप ६७, ८, ७; बृदे ७, १२८; आज्यो ७, ४; -र्ये अप २६, ३, २; -र्येषु विध ३,७५.
सर्वकार्या(र्य-अ)र्थ-साधन- -नः आज्यो २, ९.
सर्वकार्या(र्य-अ)स्वतन्त्र- -न्त्रः काग़ृ १,१०.
सर्व-काल- -लम्[e] अप ४,६,६; ६९, ७,५; मीसू १२,३,१९.
सार्वकाल- -लम् आगृ १, ४,२.
सार्वकालिक- -कम् आपध १,११,३०;३७; हिध १,३,८०; ८८.
सर्वकाल-त्व- -त्वात् मीसू ५, ४,१६.
सर्व-किल्बिष-नाशि(न्>)नी- -नी शंध ४५४.
सर्व-कुण्ड- -ण्डेषु अप २५,१,१२.
सर्व-कृच्छ्र- -च्छ्रस्य अप ३३, ४,२.
†सर्व-कृत्- -कृत् अप १, ४०, ५; अशां १०,५.
सर्व-कृति- -तिम् निसू ४,९:२०.
सर्व-कृत्य- -त्येषु आपध २,१५, ११; हिध २,३,४५.
सर्व-कृष्ण- -ष्णः माश्रौ ५,२, १०, २९.
सर्व-केश- (>सार्वकेश्य- पा.) पाग ४,३,९२.
सर्व-केश-श्मश्रु-लोम--वपन- -नम् काश्रौ १३, ४, ५; २२,६, १३.
सर्व-क्रतु- -तुभ्यः हिश्रौ १५, ६,७; -तुषु द्राश्रौ ६,४,१८; लाश्रौ २, १२,१८; -तून् अप्राय ३,५;८; -तूनाम् आपश्रौ २२,१,२; २४, १,२२; हिश्रौ १७,१,१.
सार्वक्रतुक- -कम् निसू ६, २:३२.
सर्वक्रतु-फल- -लम् वौध ३,५, ८.
सर्वक्रतु-याजिन्- -जिनाम् वौध २,७,१४.
सर्वक्रत्व(तु-अ)धिकार- -रः द्राश्रौ १,१,१; लाश्रौ १,१,१.
सर्व-क्षय-कर- -रम् अप ७२,५,१.
सर्व-क्षाम- -मे अप्राय ४, १.
सर्व-क्षेत्र- -त्रेषु विध ९६,९८.
सर्व-खात- -तम् काग्र १,८,१३[f].
सर्व-ग- पा ३, २, ४८; -०ग अअ १,४६,१; विध ९८, ३१; -गम् विध ९७,३.
†सर्व-गण[g]- -०ण वौश्रौ १७,१०:१७; -णः काश्रौ २५, १२, ५; माश्रौ ३, ६, १५; जैश्रौ १४:१३; -णम् शांश्रौ ४, १३, १; आपश्रौ ६, ११, ५; वौश्रौ; या ६, ३६∮; -णस्य काश्रौ २५, १२, ५; वौश्रौ १७, १०:१७; माश्रौ ३, ६, १५; जैश्रौ १४:१३; -णाः[h] आपश्रौ ३,२,११; माश्रौ ३, २,४; हिश्रौ ६,३,२; -णाय कौसू ४५,१६.
सर्वगणा(ण-आ)दि- -दि जैश्रौका १४४.

---

*a*) तस्मैहितीयः प्र.। *b*) तदस्यप्रयोजनमित्यर्थे ठञ् प्र.। *c*) विप. ([सर्वथा यथाकामचेष्टावत्-] अश्व- [शांश्रौ.], ओदन-)। मत्वर्थे इनिः प्र.। *d*) वस.। *e*) वा. क्रिवि.। *f*) शराववत् खातम् इति जीसं. प्रभृ.। *g*) वैप १ द्र.। *h*) = सपा. तैब्रा ३,७,५,७। आश्रौ १,७,८ सर्वतनवः इति पाभे.।

?सर्वगणसखायसाधुसंवृतः[a] पागृ ३,४,१८.
सर्व-गत,ता- -तान् शंध ११६ : २७; -ताम् बृदे ६,१२१.
सर्व-गन्ध- -न्धान् वैगृ ६७ : १३; अप ९,१,४; १८[२],१५,१; २०, ३, ४; अशां १३, ४; -न्धैः आग्निगृ २,४, ६ : ९; २४; कागृ २०,२; २१, १[b]; ३६, १; अप.
सर्वगन्ध-सर्वरस-सर्वौषधि- -धीः मागृ २,६,४; १४, २५.
सर्व-गन्ध-रत्न- -त्नैः विध ८७,५.
सर्व-गर्भ- -र्भाणाम् वैगृ ६,३ : १२.
सर्व-गामिन्->°मि-त्व- -त्वात् मीसू ३,२,३८; ९,४,१२; १०, ६,७३.
१सर्व-गुण- -णाः अप ५९,१,१८.
सर्वगुण-पूजित- -तः अप ५०, ६,२.
सर्वगुणो(ण-उ)पेत- -तैः अप २७,१,१.
२सर्व-गुण[c]- -णः काश्रौ १,३,२९.
सर्व-ग्रह- -हाणाम् आपश्रौ १४,२७, ५; वैश्रौ १५,१५ : ९; हिश्रौ ८, ४,१३; ५,१२; १५,७,४†.
सर्व-ग्रहण- -णम् पावा ३, ३,२०.
सर्व-कप- पा ३, २,४२.
सर्व-चतुर्विंश- -शम् बौश्रौ २६, १४ : १०; १३.
सर्व-चमस- -सानाम् आपश्रौ १२, २१,१६; वैश्रौ १५, २७ : २०; हिश्रौ ८,७,४.
सर्व-चरण[d]- -णानाम् या १, १७.
सर्व-चर्मन्- >°चर्मीण-,सार्वच° पा ५,२,५.
सर्व-चिकीर्षा- -र्षा मीसू ३,७,९.
सर्व-चिति- -तिषु वाश्रौ २, १, ८, १८.
सार्वचितिक,का- -कम् माश्रौ ६, २, ३, १८; -काः वाश्रौ २, २,१,६ф[e];१५; १८.
सार्वचितिकी- -क्यः[e] माश्रौ ६,२,१,७; २१; २७.
सर्व-च्छन्दस्- -न्दः उनिसू ६ : ३३; -न्दसाम् निसू ४,२ : ३३; -न्दःसु उनिसू २ : १; -न्दस्सु बौध ३, १०, ११; गौध १९, १३; -न्दांसि शंध ११६ : ३३.
सर्वच्छन्दः-संहि(त>)ता- -ताः वाध २२,९.
सर्वच्छन्दस्य,स्या- -स्याः निसू ४,२ : ३२; ८,७ : ५; -स्यानि निसू ७, ५ : १९.
सर्व-ज- -जान् आपश्रौ १३, १८, ९†.
सर्व-जगत्-पति- -तिः अप ६६, १,३.
सर्व-जगद्-बीज- -जम् वैध १, ९, १५.
सर्व-ज(टा>)ट[c]- -टः मागृ १, २, ६; वागृ ६,२६;७,२१.
सर्व-जन[f]- पाग ४,४,९९.
सार्वजनिक- पावा ५,१,९.
सार्वजनीन- पा ४,४,९९.
सर्वजन-प्रिय- -यः अप १२,१, ९.
सर्वजनीन- पावा ५,१,९.
सर्व-जनपद- -देषु आपध १, २०, ८; २, २९, १४; हिध १, ६, २२.
सर्व-जन्य[g]- -न्यम् या ११,१०.
सर्व-जय- -यम् विध ९२,२५.
सर्व-जलज-मांसा(स-अ)शन- -ने विध ५१,२२.
सर्व-जित्[h]- -जित् काश्रौ २२, १, ४४; आपश्रौ १६, ३०, १†; २२,२३,४; वैश्रौ १८, २० : ४†; हिश्रौ ११, ८, ४†; १७, ८, ३४; -जितम् शांश्रौ १४, ४८,१; -जिता आपश्रौ २२, १,१६; हिश्रौ १७, १, १८; -जिति वैताश्रौ ३९, १८.
सर्वजिद्-अभिजिद्-विश्वजित्- -जिताम् काश्रौ २४, ५, ४.
सर्वजिद्-दी(क्षा>)क्ष[c]- -क्षाः काश्रौ २३, ४, २९; -क्षाणि काश्रौ २४, ३,३१; -क्षौ काश्रौ २२,१०,३३.
सर्वजिद्-द्वादशाह- -हः क्षुसू २ १६ : १७.
सर्वजिद्-धनजित्- -जितोः शांश्रौ १५,११,११.
सर्व-जीविन्- -विनः आश्रौ २, ६, २३.
सर्व-ज्ञ- -ज्ञः अप १, ४०,५†××; अशां १०,५†; -ज्ञम् अप ६९, १,१; विध ९७, २; शैशि ८.
१सर्व-ज्ञान- -नानि अप ४१,६,५.
२सर्व-ज्ञान[c]- -नः या १४, ५.

*a*) यन्मेकिञ्चिद् (=पागृ २, १७,९) इति, अस्त्युपहूतः, सर्वगण-सखः(इन्द्रः), यः, साधु-संवृत-> -तः इति मंत्रपूर्वार्ध-शोधः (वैतु. जयरामः द्रस. >तृस. इति, BC. Old. सर्वगणः, सखायः [प्र३], साधु-संवृत्- [वस.] >-वृतः इति पदत्रयमिति)। उत्तरार्धेऽपि ?गृहान्नः> गृहा(:), नः इति शोधः। *b*) पाभे. पृ १७८५ b द्र.। *c*) बस.। *d*) उप. = शाखा-। *e*) परस्परं पाभे.। *f*) कस.। *g*) = विश्व-जन्य- (तु. वैप १)। *h*) = एकाह-विशेष-।

सर्व-ज्यानि- -निः अअ १२, ५, (३)†; –निम् आश्रौ ९, ८, २; वाधूश्रौ ३, ७५ : ११; ७९ : १९; लाश्रौ १०, १७, ७; अअ ११, ३(२)†; –न्याम् काश्रौ २४,६,१९.

सर्व-ज्योतिस्[a]- -तिः काश्रौ २२, २,८; आपश्रौ २२,२, ५; हिश्रौ १७,१,२३.

सर्व-तत्त्व-विवर्जित- -तम् विध ९७,१७.

†सर्व-तनु[b]- -नवः आश्रौ १, ७, ८[c]; –नुः बौध ४, २, ११; –नुम् कौगृ ५, ३, ३०; आग्निगृ ३,६,१ : २८; बौपि १,९ : ५.

सर्व-तस्(ः) आश्रौ १, १२, ३३; काश्रौ; आपमं २, २२,९[d]; आगृ २, ४, १४[e]; पागृ ३, ४, १८[f]; आपध १, १९, ८[g]; हिध १,५, ११०[g]; पावा ५,४,४४[h].

सर्वतः-प्रस्रवण- -णानि बौश्रौ १५,१ : ५.

सर्वतः-सर्वेन्द्रिय-शक्ति[i]- -क्तिम् विध ९७, ४.

सर्वतो(तस्-अ)क्षि-शिरो-मुख- -खम् विध ९७,४.

सर्वतो-दिश[j]- -शम् अप ५०, ७,२.

सर्वतो-द्वार[b]- -रम् हिश्रौ ७, १, ३०.

सर्वतो-धा(रा>)र[b]- -रम् या १३,८.

सर्वतो-धुर[b,k]- -रम् बौध १, १०,७; –राः बौश्रौ १७,२० : १.

सर्वतो-भद्र[l]- -द्रम् वाधूश्रौ ३, ३८ : १;३;५;६; अप १,४४,७.

सर्वतो-भय[b]- -यात् आगृ ३, ११,१.

सर्वतो-भाव- -वम् या १, ३.

सर्वतो-मुख[b]- -खः बौश्रौ २६, ३३ : १९[a]; –खम् आपश्रौ १७, १०,२; ४; ७; बौश्रौ १०, ३५: २६××; २३,१९ : १[a]; –खस्य बौश्रौ २२, ७ : १०; ८ : ३५; –खाः शांगृ ६, ३, ३; –खान् मागृ २,१४,२८; –खे बौश्रौ २३, १९ : २[a]; –खेन आपश्रौ २२, ११,१२; बौश्रौ १८,४९ : ४; ६.

सर्वतोमुखी- -खी कौगृ ३, १५, ३; शांगृ ३, १२, ५; अप ७०[३],२,३.

सर्वतो-विज(य>)या[p]- -याम् अप ६,१,१४.

सर्व-ताति[m]- पा ४,४,१४२; –†तये ऋप्रा ८, ३१; –†ता आश्रौ ४, १०, १[n]; शांश्रौ ५, १४, ८[n]; या ११, २४ф; –तिम् उसू ४, १८†.

सर्व-तीक्ष्ण- -क्ष्णः माशि ८,२.

सर्व-तीर्थ- -र्थानाम् विध ३५, ६; –र्थानि शंध ११६ : १३; –र्थेषु अप ४०,४,५; –र्थैः वैगृ १,२:९.

सर्वतीर्थ-जल- -लम् वैगृ १,६:३.

सर्वतीर्थो(र्थ-उ)पस्पर्शन- -नम् वाध २९,११.

सर्व-तूर्य-निनाद- -देन अप ५,४,३.

सर्व-तृण- -णानि गोगृ १, ५, १९; जैगृ १, १ : १२; –णेभ्यः बौश्रौ २८,१३ : १२.

सर्व-त्याग- -गम् वैध ३,६,५.

सर्व-त्र आश्रौ १, १,१९××; शांश्रौ; पा ४,१,१८,३,२२××.

सार्वत्रिक- -कम् आपश्रौ २,१२,९; १८,३; १५,१९, ६; बौश्रौ २७, १४ : २८; भाश्रौ; बौगृ १,३,१८; मीसू ७,१,४.

सर्वत्र-ग- पावा ३,२,४८.

सर्व-त्रिष्टुभ्->सार्वत्रैष्टुभ[o]- -भः बौश्रौ २४,३७ : ११; १३;१८.

सर्व-त्व- -त्वम् मीसू १, २, १६; १०,२,१८.

सर्व-था शंध ३०७; विध ११, ८; गौध ७,२२; बृदे७,१४०; ऋप्रा.

सर्व-दंष्ट्रिन्- -ष्ट्रिषु अप ५५,२,३.

सर्व-दमन- पाग ३, १, १३४.

सर्व-द[र्वि[p]],र्वीहोम- -माणाम्[q] भागृ १, ४ : १२; हिगृ १, ३, १; –मानाम्[q] आग्निगृ १, १, १ : ५५; ६, ३ : २६; बौगृ १, ३,३९; –मेषु भागृ ३,२ : १५.

सर्व-दर्शन- -नम् मीसू ६,२, २.

सर्व-दा आपश्रौ ६, २७, ३†[f]; हिश्रौ ६,७, ८†[f]; कौगृ; कागृ २७, ३†[f]; †हिगृ १, १४, ४[d]; २९ : १[f]; कौसू ५६, १७†[r]; पा ५,३,१५.

---

*a*) =एकाह-विशेष- । *b*) वस. । *c*) पाभे. पृ २६०० h द्र. । *d*) सपा. सर्वतः<>सर्वदा इति पाभे. । *e*) सपा. मागृ २,८,६ आयुः इति पाभे. । *f*) सपा. सर्वतः<>सर्वदा इति पाभे. । *g*) पृ ७३४ f द्र. । *h*) तु. पागम. । *i*) वस.>पस. । *j*) अस. । *k*) समासान्तः अच् प्र. । *l*) नाप. (लोक-, १आसन-)। वस. । *m*) वैप १ द्र. । *n*) पाभे. वैप १ वार्याणि काठ ३७,९ टि. द्र. । *o*) तस्येदमीये अणि उभयत्र वृद्धिः । *p*) भागृ. हिगृ. पाठः । *q*) परस्परं पाभे. । *r*) पाभे. वैप २, ३खं. सर्वतः मंब्रा २, ६,४ टि. द्र. ।

सर्व-दान- -नात् मीसू ३,५,५.
सर्वदाना(न-अ)धिक- -कम् विध ९२,१.
सर्व-दान-होम-पाक--निषेध- -धः मीसू १०, ८, १२.
सर्व-दाय- -यान् विध ३, ८४.
सर्व-दाह- -हे आपश्रौ ९, १५, ८; मीसू ६,४,१८.
सर्व-दिव्य- -व्यानि विध ९,३३.
सर्व-दिश्- -दिक्षु अप २१, ५, ४; ६८,५,२१; २२; -दिशः हिश्रौ १७,१,३४.
सर्वदिक्-था[a] अप ७०[1],३,२.
सर्व-दु(द>)घा- -घा आज्यो १३,८.
सर्व-दृक्-त्व- -त्वम् बृदे ३, १३४.
सर्व-देव- -वान् वैगृ १, १३ : ३; -वानाम् विध १,५७; ८९, २; -वेभ्यः वैगृ १, १५ : १४†.
सर्वदेव-म(य>)यी- -यीम् अअ ४, ३०.
सर्वदेवा(व-अ)र्चना- -ना वैगृ ४, १० : १.
¶सर्व-देव-जन- -नान् आग्निगृ २, ६,३ : ४४; बौश्र २, ५, ३०[b]; -नेभ्यः आश्रौ २,४,१२[c]; भागृ ३,१४ : १५.
सर्व-देवता- -ताः वैश्रौ २०, ३० : १५; वैगृ ३, २१ : ११; शंध ४५७ : १४;१६; -ताभ्यः भागृ ३, १३ : ५.
सर्वदेवता-मय- -यम् आग्निगृ २,४,१२ : ३.
सर्वदेवत्य,त्या- -त्यः ऋअ १, २,११; -त्यं आपश्रौ १९, २, १९; २०,४.

सर्व-देव-पितृ--दैवत्य- -त्यम् वैगृ २,१ : ३.
सर्व-देश->°श्य- -श्यम् ऋप्रा ९, ४१.
सर्व-देहिन्- -हिनाम् विध १३, ६.
सर्व-दोष-विनाशन- -नम् अप ४, ६,५; ६९,७,४.
सर्वदोष-विवर्जित,ता- -तः कौशि ५२; -ताः अप २६, ४,५.
सर्व-दोपो(ष-उ)पघाता(त--अ)र्थ- -र्थम् बौध ४, १, ३०.
सर्व-द्रव्य- -व्ये अप ७०,४,१०.
सर्वद्रव्य-परित्याग- -गात् अप २, ६, ४; सुधप ८६ : १२.
सर्व-धन-धान्य--संपूर्ण- -र्णम् वैगृ १,७ : ६.
सर्व-धना(न-आ)ग(दि--अ)र्थ- -र्थम् पावा २,१, ६९.
सर्व-धना(न-अ)पहार- -रे बाध १६,३६.
सर्व-धर्म[d]- -र्मः मीसू १, ३, १६; ३,१,७; -र्माणाम् हिध २, ५, १९३; -र्मेभ्यः गौध १३, ३१; -र्मेषु आपध १, ८, २४; हिध १,२,११२.
सर्वधर्मा(र्म-अ)नुष्ठान- -नानि हिध २,५,१९३.
सर्व-धा[e]->°धा-तम[e]- -मम् आपश्रौ ६,२२,१†.
सर्व-धातु- -तुभ्यः पावा ३,१,१३४.
सार्वधातुक[f]- -कम् पा १,२,४; ३,४,११३; पावा १, ४, १; ३, १, ७८; -के अप्रा २,८,२; पा ३,१,६७; ६,४,८७××; पावा १, १, ६७; २, ४, ३५; ३, १, ३१; ६,४,६४.

सार्वधातुक° पावा १,२,१.
°सार्वधातुक- -कम् पा ६, १, १८६; -के पावा ७, ३, १११.
°सार्वधातुका(क-अ)नुदात्त्व- -त्वे पावा १,१,६७.
°सार्वधातुका(क-अ)नुदात्त-प्रतिषेध- -धात् पावा ६,१,१५७.
सार्वधातुक-ग्रहण- -णम् पावा ७,३,९५.
सार्वधातुक-त्व- -त्वात् पावा ६,४,५२; ७,३,८५.
सार्वधातुक-वचन- -नम् पावा ३,१,९०.
सार्वधातुका(क-आ)देश- -शे पावा ३,१,८३.
सार्वधातुका(क-अ)र्थ- -र्थाः पावा ३,१,६७.
सार्वधातुका(क-आ)र्धधातुक- -कयोः पा ७,३,८४.
सर्व-धान्य- -न्यानाम् अप ५३, ४,५.
सर्व-धुर->°रीण- पा ४,४,७८.
सर्व-धूपा(प-अ)र्थ- -र्थे विध ७९,९.
सर्व-नक्षत्र-होम- -मेषु अप २४, १,२.
सर्व-नामन्[f,g]- -म या १,७; ५,२२; अप्रा २,३,२८; पाग ८,४,३९[h]; -मभिः बृदे २, ९७; -मानम् या ६,३६; -मानि पा १,१,२७; -म्नः ऋत ५, १, ७; पा २,३, २७××; पावा; -म्ना आपध १, १४,२३; हिध १,४,५२; या ७, २[3]; शौच ४,६९.

a) थाल् प्र. उसं. (पा ५,३,२३)। b) सर्प° इति चौसं.। c) पाभे. पृ २५९६ ] द्र.। d) पस. वा कस. वा। e) वैप १ द्र.। f) पारिभाषिक-संज्ञा-। g) विप., नाप.। h) तु. पागम.।

सर्वनाम-त्व- -त्वे पावा १, १, २७.
सर्वनाम-निर्देश- -शे पावा ४, १,९२.
सर्वनाम-संख्या- -ख्ययोः पावा २,२, ३५.
सर्वनाम-संज्ञा- -ज्ञायाम् पावा १,१,२७; ८,४,३,
सर्वनाम-स्थान[a]- -नम् पा १, १, ४२; पावा १, १, ४३; -ने पा ६,१,१९९; ४, ८××; पावा १,१,६३; ६,१,९२;७,१,९०[२].
°सर्वनामस्थान- -नयोः पा ७,३,११०.
सर्वनामस्थान-प्रकरण- -णे पावा ६,४,१३.
सर्वनाम-स्वर-समास-तद्धित-विधि° पावा ४,१,१.
सर्वनाम-स्वर-समासान्त- -न्तेपु पावा ८,१,९.
सर्वनामा(म-अ)व्यय-धातु-विधि- -धौ पावा १,१,७२.
सर्वनामा(म-अ)व्यय-संज्ञा- -ज्ञायाम् पावा १,१,७२.
सर्व-नाश- -शः वाध १, ३८; -शे काश्रौ २५,४,१३; काश्रौसं ३६ : १०; मीसू ६,४,१७.
सर्व-नासिक[b]- -कः याशि २,७१.
सर्व-निधन[b]- -नः शांश्रौ १५,१०,२.
सर्व-पक्ति-मांसा(स-अ)शन- -ने विध ५१,३१.
सर्व-पण्य- -ण्येषु आज्यो ५, १०; -ण्यैः वौध २,१,४१.
सर्व-पति- -ती या ५,२८.
सर्व-पत्र->°त्रीण-,सर्व-पथ-> °थीन- पा ५,२,७.
सर्व-पद-सगति-ग्रहणा(ण-आ) नर्थक्य- -क्यम् पावा ८,१,४.
सर्व-पद-समाम्नान- -नाय निघ ३,१२; या ३, १३.
सर्व-पयस्- -यांसि विध ५१,३८.
सर्व-परिवर्स्य- -र्स्यम् भाश्रौ ११, १३,३[c].
सर्व-परिदान- -नात् मीसू ३, ४, १७.
सर्व-परोक्ष-पृष्ठ- -ष्ठः क्षुसू २,१० : १५.
१सर्व-पशु- -शूनाम् हिश्रौ ४, ५, ६१; द्राश्रौ १३, ३, १५; १८; लाश्रौ ५,३, १७; ४, ३; निसू ८,७ : ६;१४.
२सर्व-पशु[b]- -शुम् आपश्रौ ५, १२, २; १३, ८××; वौश्रौ २, १६ : ११; हिश्रौ ३, ३, ४१; -शूनि शांश्रौ १४,१०,२२.
सर्व-पाकयज्ञ->°ज्ञिय- -यम् कौसू १३७,४३.
सर्व-पातक- -केपु वौध ४, ३, २; -कैः वाध २७,१९; वौध ४, २, १४.
सर्व-पात्र->°त्रीण- पा ५, २, ७.
सर्व-पान[d]- -नम् शांश्रौ ४,२१,१७.
सर्व-पाप- -पम् हिश्रौ ६,४,१८†[e]; -पानाम् गौपि २१,३,१७†;वौध ३,६, ४; विध ४८,१७; -पानि वाध २९, २१; विध ४८, १५; ५५,८;-पेभ्यः कौगृ ३,१०,३५; ४,१,४; आमिगृ;-पेपु वाध २६, १५; -पैः वौध ४, २, ९; ८, १६; विध ८९,४; याशि १,३२.
सर्वपाप-प्रणाश- -शाय अप ११, २,२; ३३,३,१.
सर्वपाप-प्रणाशन- -नः वौध ४, ५,१५; -नम् अप ४०, ४, १; वाध २७,२०.
सर्वपापप्रणाशनी- -नीम् अप ९,१,१.
सर्वपाप-प्रणाशि(न्>)नी- -नीम् अप ७०,९,१.
सर्वपाप-सृत- -तस्य वैध३,९,१
सर्वपाप-विनिर्मुक्त- -क्तः विध ९०,१४.
सर्वपाप-विशुद्धा(द्ध-आ)त्मन्- -त्मा अप १६, २,४; वौध ४,८, १६.
सर्वपापा(प-अ)पनुत्ति- -त्तये शंध १०३; ४४८; विध ५५,८.
सर्वपापा(प-अ)पनोदक- -कः, -कम् विध ५५,७[f].
सर्वपापा(प-अ)पनोदन- -नम् अप १३, १, १.
सर्व-पापा(प-ऋ)र्ण-मुक्ता (क्त-आ) त्मन्- -त्मा वौध ४, ८,१३.
सर्व-पापा(प-ऋ)र्ण-सागर- -रात् वौध ४, ८, ११.
सर्व-पाप्मन्- -प्मानम् कौसू९८,२.
सर्व-पुण्य-विवृद्धि- -द्धये अप ११, २,२.
१सर्व-पुरुष-(>सार्वपौरुष- पा.) पाग ७,३, २०.
२सर्व-पु[,पू[g]]रुष[b]- -षाः आश्रौ १, ७,८[२]; आपश्रौ ६,२७,३; हिश्रौ ६,७,८; कागृ २७, ३; हिगृ १, २९,१; -षाय कौसू ४५,१६.

a) पारिभाषिक-संज्ञा-। b) वस.। c) पाभे. पृ २५९८ l द्र.। d) उप. =१पान-। e) सप्र. तैब्रा ३,७,९,२३ सुर्वं पापम् इति पाभे.। f) °नः, °नम् इति जीसं.। g) आश्रौ. (एकतरत्र), आपश्रौ., हिश्रौ., हिगृ. पाठः।

सर्व-पुष्प- -ष्पैः अप १,४९,२.
सर्व-पूर्व[a]- -र्वौ ऋप्रा ५, ५९.
सर्व-पृष्ठ,ष्ठा[b]- -ष्ठः शांश्रौ ११,१५, १; १६, १५, १३; १४; काश्रौ; -ष्ठम् निसू ६, ४ : २१; -ष्ठया बौश्रौ १३, २९ : १; माश्रौ ५, २,३,१; हिश्रौ १५,६, ७; बौध १,१,३०; -ष्ठा शांश्रौ ९, २६, ४; बौश्रौ २४, ६ : ३; -ष्ठात् शांश्रौ १५,६, ८; ७,९; -ष्ठानि आश्रौ ४, १२, १; -ष्ठाम् आपश्रौ १९, २२, ७; २०, ९, २[c]; माश्रौ ६, २,६,४[c]; वाश्रौ[c] ३, ३, १, ६०; ४, १, ५६; हिश्रौ २२, ४, १७; -ष्ठायाः माश्रौ ५,२,११,४७; -ष्ठे शांश्रौ ११,१५,६; १०; १२, २, १२; २३;६,८; आपश्रौ; -ष्ठेन शांश्रौ १३,१३,१; काश्रौ २५,११,४; आपश्रौ १४,२३, १; माश्रौ; -ष्ठेषु आश्रौ ८,४, १८; निसू ६,६ : २३.
सर्व-पृष्ठ्य,ष्ठ्या[d]- -ष्ठ्यः हिश्रौ १७,१,८; -ष्ठ्याम् वाश्रौ २, २, ४,२४[c]; हिश्रौ १४, २, ३५[c].
सर्व-पेषण- -णम् मीसू ३, ३, ४३.
सर्व-प्रतिनिधि- -धौ काग्टउ ४१:३.
सर्व-प्रतिषेध- -धः पावा ६, १, ११३; मीसू ९, ४, २०.
सर्व-प्रत्याम्नाय- -यः वैश्रौ १,१५: १०[e].
सर्व-प्रदान- -नम् मीसू ३,४,३७.
सर्व-प्रदान[a]-त्व- -त्वात् मीसू १०,७,२३.
सर्व-प्रयत्न- -त्नेन आग्निगृ २,७,६ : १३; ३, १२, १ : १४; १६; विध ५२,१६; ४५, ३३.
सर्व-प्रयोग- -गे मीसू ११,१,१६.
सर्व-प्रसङ्ग- -ङ्गः पावा १, १, ५०; ६०; ७३××.
सर्व-प्रस्रवण- -णानि शंध ११६ : १३.
सर्व-प्राजापत्य[a]- -त्यः[f] बौश्रौ १०, ११ : १४; -त्याः[g] बौश्रौ १६, ११ : ८; १९ : ४.
सर्व-प्राणि-हित- -तः वैध ३, १, ११; -तम् वैध ३,१२,८.
सर्व-प्रातिपदिक- -केभ्यः पावा ३, १,११; ७,१,५१[h].
सर्व-प्रापिन्- -पिना मीसू ११, १, ५२.
सर्व-प्राप्ति- -प्तेः मीसू ११,१,३८.
सर्व-प्रायश्चित्त[i]- -त्तम् शांश्रौ ३, १९, ८; काश्रौ २५,१,१०;१२; आपश्रौ ९,१, ११××; १४,२६, ७; वैश्रौ २०,१० : ६; १५, ६××; हिश्रौ; -त्तानि आश्रौ १, ११, १०; १३, ७; आपश्रौ; -त्तेषु वैश्रौ २०,२५ : ९; -त्तैः आपश्रौ ९,१२,७.
सर्वप्रायश्चित्त-प्राजापत्या (त्य-अ)न्तर- -रम् पागृ १,५,६[j].
सर्वप्रायश्चित्ता(त्त-आ)हुति- -ती शांगृ ५, १, ८; ८, ४; -तीः वैश्रौ ७, ११ : ११; कौगृ १, ५, २९; -†तीनाम् आगृ १, १०, २३; आग्निगृ १, १, २ : ११;५,४ : ३०; ३,२,२ : १३.
सर्वप्रायश्चित्तीय[k]- -यान् वैताश्रौ २३,११; कौसू ५,१२.
सर्व-प्रायश्चित्ति- -त्तिः बाध २२, १६; बौध ३,१०,१८[2].
सर्व-प्रोक्षण-मार्जन- -नानि आपश्रौ १९,१९,७.
सर्व-फल- -लम् अप २६,५,१०.
सर्वफल-प्रद- -दाः आज्यो ६, १२.
सर्व-बहुस्वार- -रः नाशि २, १,४[1].
सर्व-बीज- -जानाम् भागृ १, २८ : ९; -जानि कागृ ७२, १; भागृ १,२८ : ९; गोगृ; -जैः कागृ ५७, २; अप १, ४३, २; विध ९०,३.
सर्व-बीज-रस-रत्न-गन्धा (न्ध-अ)वकीर्ण- -र्णम् अप १०, १,१.
सर्व-बृहती- -तीषु क्षुसू ३,५ : ६; निसू ६,५ : ८;७,२ : २२××.
सर्वबृहती-प्राय[a]- -याणि निसू ६,५ : ९.
सर्व-भक्ष[m]- -क्षम् माश्रौ २,४, २, ३१; द्राश्रौ १५, ४, २०; लाश्रौ ५, १२, २४; -क्षाः काश्रौ ९, १४,६; आपश्रौ ८,१६,१२;१२, २८,१०; बौश्रौ ७, १७:३७××; वैश्रौ; -क्षान् माश्रौ २,५, २, ३२.
सर्व-भक्ष्य- > °क्ष्य-त्व- -त्वम् बौध २,२,५८.
सर्वभक्ष्या(क्ष्य-अ)पूप-कन्द-मूल-फल-मांसा(स-आ)दि- -दीनि बौध २,७,७.

a) वस. । b) वैप १ द्र. । c) परस्परं पाभे. । d) = सर्व-पृष्ठ- । e) सप्र. आपश्रौ ५,२०,१८ गवां प्रत्या° इति पाभे. । f) तु. सप्र. तैत्रा २,८,१,१ । g) कस. । h) °कानाम् इति पासि. । i) = प्रायश्चित्त-, (तन्निमित्तक-) होम- च । कस. । j) पाभे. पृ १८९४ e द्र. । k) तस्येदमीयः छः प्र. । l) पाभे. पृ १८०१ o द्र. । m) विप. (चमस- ) । उप. कर्मणि घञ् ।

१सर्व-भाग-> °य- -यम् निसू ३,६ : ३.

२सर्व-भाग[a]- -गः निसू ३,५ : १२; ६ : ३५; -गम् निसू ३, ५ : १३;६ : ३३; -गाः निसू ३,७: १४; १८; -गानि निसू ३, ७ : ७.

सर्व-भाज्- -भाक् पावा ४,१,६३.

†सर्व-भुज्- -भुक् अप १, ३७, २; अशां ७, २.

सर्व-भूत- -तस्य वैध ३, ७, १२; -तानाम् आग्निगृ २,६,१ : ३०; ७, १० : १२; माग्; -तानि कौगृ ३,१५,६†; शांगृ ४,९,३; ६, ६, १०†; आग्निगृ; -तेभ्यः निसू ४, ३ : ३; वौगृ; -तेषु आपध १,२२,७; वैध ३,५, ७; हिध; -तैः आपध १, २३, ६; हिध १,६,१४; वृदे २,२१.

सार्वभौतिक[b]- -कम् अप ६९,५,३.

सर्वभूत-कुत्सा- -त्साम् वैध ३, ३,७.

सर्वभूत-क्षय[c]- -याय आग्निगृ २, ६,८ : ३४; अप ४३,५,४९.

सर्वभूत-जिज्ञासा- -सा या १४, ३६.

सर्वभूत-निवेश(न>)नी- -नीम् अप ४,३,४.

सर्वभूत-पति- -तिः आग्निगृ १, २,१ : १८; वौगृ ३,१, २५; अप ६७,६, ७.

सर्वभूत-परीवादा(द-आ)क्रोश- -शान् आपध २, ५, १३[d].

सर्वभूत-प्रशंसा- -सा आपध २,२९,१०; हिध २,६,२३.

सर्वभूत-भय- -याय अप ५३, ६,१.

सर्वभूतभया(य-आ)वह- -हम् अप ७२,३, १६.

†सर्वभूत-भृत्- -भृत् अप १, ३९,३; ४०,२;५; अशां.

सर्वभूत-हन[e]- -ने वृदे ७,४४.

सर्वभूत-हित- -ताय अप ६६, २,६†.

सर्वभूता(त-आ)त्मन्- -त्मा ऋअ १,२,१६.

सर्वभूता(त-अ)भय-दक्षिणा- -णाम् वाध १०, १.

सर्व-भूमि- पाग ७,३,२०.

सार्वभौम- पा ५, १,४१-४३; ७, ३, २०; -मः आपश्रौ २०, १,१; वौश्रौ १५,१ : १.

सर्व-भृत्- -भृत् विध ९७, १७.

सर्व-मङ्गल-कार्य- -र्येषु आज्यो १०,३.

सर्व-मत्स्य-मांसा(स-अ)शन- -ने विध ५१,२१.

सर्व-मनोहर- -रम् विध १, २७.

सर्व-मन्त्र- -न्त्रान् काश्रौ १७, ५, २२; -न्त्रैः अप ३३,६, ६.

सर्वमन्त्र-समन्वि(त>)ता- -ताम् कप्र १,८,१०.

सर्वमन्त्रो(न्त्र-उ)क्त- -क्तम् अप २३,१३,४.

सर्व-मय- -यः या १४,५.

सर्व-मरण- -णम् काश्रौ २५, १४, २१.

सर्व-महापातक- -कैः विध ८,२३.

सर्व-मांस- -सस्य विध ५१, ७२;

सर्व-मात्रा- -त्रा[1] निसू १,५ : २४; ऋअ १७, २०; -त्राभिः या ४, २७.

सर्व-मित्र[b]- पाग ४,२,११६; -त्रः या २, २४.

सार्वमित्रि(क>)का, °की- पा ४,२,११६.

सर्व-मुख-स्थान- -नम् आशि १, ११.

सर्व-मेध[g]- -धः शांश्रौ १६, १५, १५; १९; काश्रौ; -धम् काश्रौ २५, १०,१४[h]; शुअ ३, १४३; -धे शांश्रौ १६,१५,१[2]; वैताश्रौ ३७, ९; या १०, २६; -धेन शांश्रौ १६,१५,१.

सर्व-मेध्यत्व- -त्वम् वाध २८,६.

सर्व-यज्ञ- -ज्ञानाम् वौश्रौ २८, १० : १; वैध २,१३, ७; -ज्ञेषु आपश्रौ ४,१,७; १६,१६; वाश्रौ ३,२,५,१७; अप २३,२,५.

सार्वयज्ञिक- -कम् शांश्रौ १,२, २९.

सर्व-यज्ञ-तन्त्र- -न्त्रेषु आश्रौ १, १२,१०.

सर्व-यन्त्र-> °न्त्रिन्- -न्त्री काश्रौ १४,३,९.

सर्व-याज्यानुवाक्य- -क्याः मैश्र २६.

सर्व-योग- -गेषु अप १, ३७, २; अशां ७,२†.

सर्व-योनि- -न्यः आग्निगृ २, ५,३ : २४; वौगृ ३, ७,१८.

सर्व-रङ्ग[i]- -ङ्गम् शैशि २२५.

सर्व-रत्न- -त्नानि माग् २, ६, ४;

---

*a*) वस. । *b*) भवार्थे ठञि प्र. उभयत्र वृद्धिः । *c*) वस. उप. = १क्षय- । *d*) पामे. पृ १८२३ c द्र. । *e*) उप. भावे अप् प्र. । *f*) समासः? । *g*) = याग-विशेष- । *h*) सर्वं मेधम् इति चौसं. । *i*) उप. = १रङ्ग- ।

१४,२५; अशां १२,३;-त्नैः विध ८७, ८.

सर्वरत्न-विभूषित- -तम् विध १, ४२.

सर्व-रस- -साः या १, १६; -सान् अप २०,३,४;-सैः कागृ ५७,२.

सर्व-राज्- -राट् माश्रौ २,२,३,८†.

सर्व-रात्र- पा ५, ४, ८७; -त्रम् काश्रौ २०, ४, ३१; माश्रौ ४, ७,१; सु ९, ४.

सर्व-रिप्र-प्रणोदन- -नः बृदे ८, ९२; -नम् बृदे ८,९३.

सर्व-रुद्र-यज्ञ- -ज्ञेषु आगृ ४, ८, २४.

१सर्व-रूप[a]->सार्वरूप्य[b]- -प्यात् मीसू ४,४,१०.

सर्वरूप-वत्- -वान् माशि१,१२.

सर्वरूपा(प-अ)वाप्ति- -प्तिम् निसू ४,१३:२७.

२सर्व-रूप,पा- -पः वाधूश्रौ ३, १०१:२; ४,१०८:६; वाश्रौ ३, ४,१,३; या १०, ३४; -पम् शांश्रौ १६, १, १५; काश्रौ; -पाः अश्र ९, ६(४); या ११, २९†; -पाम् अश्र ४, ३०[c]; -पे पागृ २,११,३.

सर्व-रोग- -गाः अप ६६, १, ४; -गेभ्यः कौगृ ४, १,९; -गैः अप १,४५,३.

सर्वरोग-चया(य-अ)र्थ- -र्थाय अप ३३,३,१.

सर्वरोग-प्रकोपन- -नम् अप ३६,८,४.

सर्वरोग-प्रशम(न>)नी- -नीम् अप ६४,१०,१०.

सर्वरोग-विनाश(न>)नी- -नीम् अप ६६,१,४.

सर्व-रोहित[d]- -तम् काश्रौ ८,५,२३; बौश्रौ १७,३९:६; -तेन शांश्रौ १७,३,५.

सर्व(र्व-ऋ)र्ग्-अर्ध- -र्धेन बृदे ८, ८४.

?सर्वर्त- -र्तेभ्यः अप ४८,११६†.

सर्व(र्व-ऋ)र्तु-सोम-याजिन्- -जी हिश्रौ २१,२,५†.

सर्व(र्व-ऋ)र्त्विज्- -र्त्विजः वैश्रौ १३, १६:१; हिश्रौ ७, ३,७१.

सर्व(र्व-ऋ)र्द्धि-काम- -मस्य काश्रौ २३,५,३३.

सर्व(र्व-ऋ)र्षि->°र्वाऽऽर्ष[e]- -र्षम् अश्र ८,९.

सर्व-लक्षण-लक्षित- -तः अप ७०[2], १९,३.

सर्व-लक्षण-संपूर्ण- -र्णम् अप ३०[2], १,१३.

सर्व-लक्षण-हीन- -नः वाध ६, ८; विध ७१,९२.

सर्व-लक्षणो(ण-उ)पेत- -तम् विध ८६,५.

सर्व-लवण[f]- -णानाम् विध २३, ३२.

१सर्व-लिङ्ग- -ङ्गानि मीसू ६,५,३७; -ङ्गेषु अप्रा २,४,३.

सर्वलिङ्ग-ता- -ता पावा २, १, ३६.

२सर्व-लिङ्ग[g]- -ङ्गः पावा ३, ३, १८.

सर्व-लिङ्ग-वचन- -नेषु अप्रा १,३, १३.

सर्व-लेपा(प-२अ)क्त- -क्तम् काश्रौ २६, ६,१४.

सर्व-लोक- पाग ७, ३, २०; पावाग ४,३,६०[h]; ५,१,१२४[h]; -कम् आग्निगृ २, ४, ३:१८; -कस्य पापवा ८.

सार्वलौकिक- पा ५,१,४४; ७,३,२०; पावा ४,३,६०.

सार्वलौक्य- पावा ५, १, १२४.

सर्वलोक-प्रधान- -नाः विध २०,२४.

सर्वलोक-हित- -ताय अप ३१, ४,३.

सर्व-लोप-विज्ञान- -नम् पावा ६, ४,१५४.

सर्व-लोहित- -तम् आग्निगृ १, ३, १:६.

सर्व-वचन- -नम् पावा ४,३,१००; ८,१,१; १८; मीसू ३, २, १५; ५,१०.

सर्व-व(त्>)ती- -०ति मागृ २, १४,३०.

सर्व-वनस्पति- -तीनाम् बौश्रौ २८, १३:१६; गोगृ १,५,१६; जैगृ १,१:१०.

सर्व-वन्दिन्- -न्दी वैध ३,१३,११.

१सर्व-वर्ण- -र्णः शैशि ४७; -र्णाः अप २०,२,४; -र्णानाम् शांश्रौ २,१,५; आग्निगृ २, ७, ७:९; आपध; -र्णेभ्यः आपध २, २९, १५; बौध २,९,१४; १०,५४[2]; विध ३,६६; -र्णेषु वैध १,९,७.

सार्ववर्णिक[i]- -कः आपश्रौ ५,३,२०; भाश्रौ ५,२,४; -कम् आपश्रौ २४, १०, १८; वाश्रौ

a) कस. । b) भाप. । c) °प इति पाठः? यनि. शोधः (तु. सात.) । d) विप. (चर्मन्-) । मलो. कस. । e) सास्यदेवतीये अणि प्र. उप. वृद्धिः । f) उप. = १लवण- । g) वस. । h) तु. पागम. । i) इदमाद्यर्थे ठक् प्र. ।

१,४,१,२; हिश्रौ २१, ३, १८; आपध १, ३,७; बौध २, ४,३; विध ८१,२१; हिध १, १, ७९; गौध २, ४२; -का: हिश्रौ १०, २, ५३; -के शैशि २६२.

सर्ववर्णा(र्ण-आभा>)भ[a]- -भः माशि १,१४.

२सर्व-वर्ण,र्णा[a]- -र्णः नाशि १,४, २; -र्णाः जैगृ १, १ : १३.

सर्व-वाङ्-निधन- -नः शांश्रौ १५, १०,४.

सर्व-वादित्र- -त्राणि कौसू १६,१.

सर्व-वानस्प(त्य>)त्या[a]- -त्याम् अप २०,१,३.

सर्व-वायव्य[a]- -व्यः बौश्रौ १०, ११ : १२.

सर्व-विकार- -रः मीसू १०,३,६९; -रे काश्रौ ६,७,२४; मीसू १०, ३,११.

सर्व-विक्रयिन्- -यी हिध २,५,४९.

सर्व-विघ्न-प्रणाशिन्- -शिने शैशि १०.

सर्व-वि(द्या>)द्य[a]- -द्यः या १,८.

सर्व-विद्या- पाग ४, २, ६०[b]; पावाग ५, १, १२४[b]; -द्यानाम् आपध २,५,१; हिध २,१,८१.

सार्वविद्यिक- पा ४,२,६०.

१सार्ववैद्य- पावा ५,१,१२४.

सर्व-विनाश- -शाय अप २६, ३,१; -शे बौश्रौ २९, १ : १२; १४; गौध १२,२३.

†सर्व-विन्द- -न्दाय कागृ ४, २०; गौध २६,१२.

सर्व-विभक्ति- -क्तिः पावा १, १, ३८.

सर्व-विभाषा(षा-अ)र्थ- -र्थम् पावा ५,२,९७.

सर्व-विषय-त्व- -त्वम् मीसू ९,१, १५.

†सर्व-वीर,रा[c]- -रः आश्रौ ४, ४, २[d]; शांश्रौ ५,६, २[d]; बौश्रौ ६, ९ : १३[d]; माश्रौ २, १, ३, १५[d]; वैश्रौ १२, १४ : १५[d]; आग्निगृ; -रम् आश्रौ २, ७, ९; बौश्रौ १८, ४० : ९; वाश्रौ; अप १[२],१,४; -राः आश्रौ १, ७, ८§; आग्निगृ २, ४, १ : १२; कागृ ११, २; ३; भागृ; -राम् आग्निगृ ३,१,१:११[e]; भागृ २, ३ : १२; ११ : ११; -राय कौसू ४५,१६; -०रे माश्रौ ६, २,३,८[f].

सर्व-वृक्ष- -क्षेषु हिगृ १,११, ८†.

१सर्व-वेद[g]- पाग ७,३,२०[b]; पावाग ५, १, १२४[b]; -दः चाअभू ४; -दाः कौशि ७२; -दान् बृदे ५, ५३; -देभ्यः बौश्रौ २७, ११ :१४; -देषु बृदे १, ४०.

सार्ववैदिक[h]- पा ७,३,२०[b]; -कः कौसू ६७,७; -कम्, -काः नाशि १, १, १४.

२सार्ववैद्य- पा ७, ३, २०; पावा ५,१,१२४.

२सर्ववेद[i]- (>सार्ववेद्य-, ३सार्ववैद्य- पावा.) पावाग ५, १, १२४[j].

सर्ववेद-त्रिरात्र- -त्रे शांश्रौ १६, २२,२९.

सर्ववेद-पवित्र- -त्राणि वाध २८,१०;शंध १०५;विध ५६,१.

सर्ववेद-शरीर- > °रिन्- -रिणाम् सु ४, ६.

सर्ववेद-संमित- -तम् वौगृ ३, २,५९.

सर्व-वेदस्[c]- पाउवृ ४, २२७.

सर्व-वेदस[c]- -सम्[k] काश्रौ २२,१, ९; २५,११,१०; आपश्रौ; -से[l] आपश्रौ १०, २६, ५; १२, ८, १३××; वाश्रौ; -सेन[l] काश्रौ २५,११,४; बौश्रौ १४,२९:३२.

सर्ववेदस-दक्षि(णा>)ण[m]- -णः आपश्रौ २२,४,११; -णम् लाश्रौ ८, २, २७; -णानाम् लाश्रौ ८, २, १३; -णेन शांश्रौ १३,१३, १; आपश्रौ १४, २३, १; माश्रौ ३, ८, ९; वैश्रौ २१, १० : ३; हिश्रौ १५,६,१; १६, ५,१२; अप्राय ६, ५.

सर्ववेदस-निर्मा[n]- -र्माम् लाश्रौ ८,४,१४.

सर्ववेदस-संयुक्त- -क्ताः निसू ६,६ : ६.

सर्व-वेदिन्- दिनम् अप ७०,१,७.

सर्व-वैदिकी- -क्यः विध ५५, १८.

सर्व-व्याधि-रहित- -तः अप ३२, १,११.

सर्व-व्यापक-त्व- -त्वम् वैध १,

*a*) वस. । *b*) तु. पागम. । *c*) वैप १ द्र. । *d*) = सपा. तै १,२,३,३ ऐव्रा १,१३ । शौ ७,९,१ °रम् इति पाभे. । *e*) °रान् इति पाठः? यनि. शोधः (तु. वैप १ सुवैवीरम् शौ १८,४,४० इति पाभे.) । *f*) पाभे. वैप १ विश्ववारे तै ३,५,१,१ टि. द्र. । *g*) उप. = २वेद- । *h*) भवार्थे ठञ् प्र. उभयपदवृद्धिश्च । *i*) अध्येतृप्रत्ययस्य लुक् (पावा ४,२,६०) । *j*) तु. पासि. । *k*) = सर्व-स्व- । *l*) = यज्ञ-विशेष- । *m*) वस. उप. = २दक्षिणा- । *n*) षस. उप. = निर्माण- (तु. PW. प्रभृ.) ।

११,१०[n].
सर्व-व्याप्या(प्य-आ)काश— -वत् वैध १,११,१०.
†सर्व-व्रत[b]- -तः आपमं २,५,१०; ६,१३; आगृ; -तम् आगृ ३,९,१; काग्ृ ४१,२३.
सर्व-शक्ति- -क्तौ मीसू ६,३,१.
सर्व-शत्रु-निवर्हण- -णः आज्यो ३,२; -णम् अप २०,७,२.
सर्व-शत्रु-विनाश- -शाय अप ३४,१,५.
सर्व-शब्द- -ब्दः लाश्रौ १०, ९, २०; -ब्दस्य मीसू ७, ३, ११.
सर्व-शस् (:) आश्रौ २,१४,२६××; शांश्रौ; वैश्रौ १५, ३८ : ५[c].
सर्व-शस्त्र[d]- -स्त्राणाम् वैश्रौ १५, ३६ : ४; हिश्रौ ८,८,३०.
सर्वशस्त्रा(स्त्र-अ)न्त- -न्ते वैश्रौ १५,३६ : ५.
सर्व-शस्त्र-परिधानी(य>)या- -यासु आश्रौ ५,९,२५
सर्व-शस्त्र-याज्या(ज्या—अ)न्त- -न्तेषु आश्रौ ५,९,२७.
सर्व-शाखा- -खासु नाशि २,८,८.
सर्व-शान्ति- -न्तिम् अप २८,२,५.
सर्वशान्ति-कर[e]- -रम् अप २५,१,१०; ६७,८,८.
सर्व-शास्त्र- -स्त्राणि शंध ४; -स्त्रेषु माशि १,४; याशि १,५१.
सर्वशास्त्र-रहस्य- -स्यम् याशि २,११७.
सर्वशास्त्र-विद्[f]- -विदम् अप ६८,५,१८.
सर्वशास्त्र-विशारद- -॰द अप २९,१,२; -दाः कौशि ६४.
सर्वशास्त्रा(स्त्र-अ)र्थ- -र्थम् ऋप्रा १,५४.
सर्व-शिक्षा-विशारद- -दाः कौशि ५७.
सर्व-शिरः-स्थान- -ने वैश्रौ १८,६ : ३.
सर्व-शिल्प- -ल्पानि हिश्रौ १६,६,१४; विध २,१४; -ल्पे हिश्रौ १६,६,२२.
सर्व—शीर्षामया(य-आ)दया(दि-आ)मय- -यम् अअ ९,८[g].
सर्व-शुद्धि- -द्धिषु वैध ३,३,९.
सर्व-शेषत्व- -त्वात् मीसू २,४,२४; ६,१,४४; ८,१; १०,६,६९.
?सर्वश्रित- -तः वौश्रौ १७,२३:११.
सर्व-श्वेत- -तम् सु ६,२.
सर्व-संयोग- -गात् मीसू ३,५,१; २५; २९; १०,८,४७.
सर्व-संस्कार- -रः मीसू १०,६,६९.
सर्व-संस्था- -स्थाम् वौश्रौ ८,२१ : १५; १०,११ : १६; ५९ : १७; -स्थासु आपश्रौ १४,१,१०; २,१; वैश्रौ १७,१ : ७; ६ : ११.
सर्व-सं(ख्या>)ख्य[h]-त्व- -त्वात् मीसू ५,३,२.
सर्व-संख्या-विकार- -रः मीसू १०,६,२२.
सर्व-सङ्ग-निवृत्त- -त्तस्य आमिगृ ३,१०,४ : ३५.
सर्व-सत्त्व-हित- -ते अप ७०,१,१.
सर्व-सत्र- -त्रेषु लाश्रौ १०,१,१.
सर्व-संधि-ज- -जम् नाशि१,५,६.
सर्व-संनाह[h]- -हम् अप २०,२,४.
सर्व-सप्तदश[h]- -शम् वौश्रौ २५,३४ : १२; २६,१६ : ४; ६.
सर्व-सम[i]- -माः वैध १,९,७.
सर्व-समास- -सः काश्रौ १२,६,१८; काशु ५,२.
सर्व-समृद्ध- -द्धम् आगृ २,७,८.
सर्व-समृद्धि- -द्ध्यै वौश्रौ १,२१ : १४†.
सर्व-संपद्- -पत् अप ७०,१२,४.
सर्वसंपत्-समृद्धि- -द्धिः वैगृ ७,१ : ९; ८ : १३.
सर्व-संप(न्न>)न्ना- -न्ना आगृ १,५,५.
सर्व-संप्रत्यया(य-अ)र्थ- -र्थः पावा १,३,१०.
सर्व-संभार-पूरित- -तम् अप १४,१,३.
सर्व-सर्व-समुच्चय- -यः अप ७०[३],११,१.
सर्व-सस्य- -स्येभ्यः विध ३,२३; -स्येषु अप ५९,१,३.
सर्व-सस्य-रत्न-गन्धो(न्ध—उ)पेत- -तम् विध ९०,१६.
सर्व-साक्षिन्- -॰क्षिन् कप्र २,४,११.
सर्व-सा(स[j]-आ)दि[k]- -देः पावा ४,२,६०.
सर्व-सामन्- -मसु निसू २,१३ : ३६; -म्नः हिश्रौ २४,६,३[l].
सर्व-सांपद- -दम् आज्यो ७,१६; -दानि कौसू ११,११.
सर्व-साम्य- -म्ये आश्रौ १२,८,१७.
सर्व-सिद्धि- -द्धिः अप २,५,५; मीसू ७,१,८[m].

---

*a*) °त्वात् इति BI. । *b*) वस. वा कस. वा । *c*) पाभे. पृ २५९८ j द्र. । *d*) उप. = १शस्त्र- । *e*) उप. कर्तरि <√कृ । *f*) उप. <√विद् (ज्ञाने) । *g*) °मयांद्याम° इति पाठः? यनि. शोधः (तु. W.)। *h*) वस. । *i*) सस. वा वस. वा उप. = १सम- । *j*) = ४स- । *k*) तु. पाका. । सर्वादेः, सादेः इति पासि. । *l*) सर्वे साम्नः इति द्विपदः शोधः (तु. चतुर्थं सूत्रम्)। *m*) सर्वधर्मः इति जीसं. ।

सर्व-सुख[a]- -खः अप २२,८,२.
सर्व-सुरभि- -भि काश्रौ ७,४,२३; हिगृ १,१०,४.
१सर्वसुरभि-गन्ध- -न्धैः कौगृ १,१८,२.
२सर्वसुरभि-ग(न्ध>)न्धा[a]- -न्धया वौगृ १,५,२९.
सर्वसुरभि-चूर्ण- -र्णानि कौसू २६, २९; ७६, ३१; -र्णैः कौसू ५८, १२; ८२, ३१; ८३, २०.
सर्वसुरभित[b]- -तम् आग्निगृ १, ७, १ : २; १३.
सर्वसुरभि-तिलो(ल-उ)न्मिश्र--पात्र- -त्रेषु शंध२१२.
सर्वसुरभि-पिष्ट[c]- -ष्टम् बौश्रौ १७, ३९ : ३; ४० : २७; आग्निगृ १,३,१ : ३; ३ : १३.
सर्वसुरभि-मिश्र- -श्राणि काश्रौ २५,८,३; -श्रैः कौगृ १,७,१[d].
सर्वसुरभ्यु(भि-उ)न्मृदित- -तम् काश्रौ १९,४,१४.
सर्व-सूक्त- -क्तेन अप ४६,२,१.
१सर्व-सूत्र- > सार्वसूत्र- -त्रम्[e] आपश्रौ ५, २०, ७; १३, ६, १; माश्रौ ५,१२,१६; वैश्रौ १,१५ : ८; हिश्रौ ६,५,१८.
२सर्व-सूत्र[a]- -त्रम्[e] माश्रौ १,५, ६,८; वाश्रौ १,४,३,३७.
सर्व-सेन[f]- पाग ४, ३,९२.
१सार्वसेन[g]- -नम् आश्रौ १०, २,२७.
२सार्वसेन[f]- >सार्वसेन-यज्ञ- -ज्ञः वैताश्रौ ४३, २४[h].
सार्वसेनि[i]- पाग ५, ३,११६[j]; -निः बौश्रौ १७,५४ : ६.
सार्वसेनि-यज्ञ- -ज्ञः आपश्रौ ३,१७,१२; बौश्रौ १७,५४ : ४; -ज्ञे शांश्रौ ३, १०, १; -ज्ञेन शांश्रौ ३,११,१.
सार्वसेनीय- पा ५,३,११६.
सार्वसेन्य- पा ४, ३,९२.
सर्व-सैन्य- -न्यानाम् अप २६,५,४.
सर्व-सोम- -मम् हिश्रौ ८, ५,१८; -मान् वैश्रौ १५,२१ : १; हिश्रौ ८, २, १९; २०[k]; -मानाम् आपश्रौ १२, २४,११; १४,१०, १३; हिश्रौ ८, २, २५; ६,१४; -मेभ्यः आपश्रौ १८, ७,९.
सर्वसोमा(म-आ)हुति- -तीः हिश्रौ ८,२,१५.
सर्व-सोप्मो(प्म-ऊ)ष्म--पूर्व- -र्वात् ऋप्रा १४,५२.
सर्व-स्कम्भ- -म्भे काश्रौसं ३३ : ४; १०; ११; माश्रौ ३,१,१९.
सर्व-स्तोत्र- -त्राणाम् आपश्रौ १४, १०,२; वैश्रौ १७,६ : ८; हिश्रौ १०,८,४५; -त्रेषु द्राश्रौ ३, २, ३०; लाश्रौ १, ११, २३; निसू २,४ : ३२.
सर्वस्तोत्र-ग्रह- -हात् जैश्रौका ८०.
सर्व-स्तोम[k]- -मः आश्रौ ९,३,२६; १०, १, ५××; शांश्रौ; -मम् आश्रौ ११, ६, ९; शांश्रौ १३, १५, २; माश्रौ; -मयोः वैताश्रौ ४०,७; -मे वाश्रौ ३,२,५,१८; लाश्रौ १०,४,१५; -मेन शांश्रौ १३, १३,१; आपश्रौ १४, २३, १; २२, १३,१७; बौश्रौ; -मेषु आश्रौ ८, ४,१७; माश्रौ ५, २, १२,४६; निसू १०, ५ : २३.
सर्वस्तोम-नवसप्तदश- -शौ आश्रौ ११, ५, ५; काश्रौ २४, ३,७.
सर्वस्तोम-सर्वपृष्ठ- -ष्ठेषु आश्रौ ७,२,११.
सर्वस्तोम-स्थान- -ने आश्रौ ११,६,७.
सर्व-स्थान- -नानि नाशि १,५,१२; -नेषु बौश्रौ २९, ४ : २५.
सर्व-स्व- -स्वम् काश्रौ २१, १, १५; आपश्रौ ९, २०, ६; २२, १, ९; २३, १३, ४; काश्रौसं २६ : ७; बौश्रौ १५, ४ : १०; ८ : ४; माश्रौ.
सर्वस्व-ज्यानि- -न्याम् आश्रौ १२,६,३३.
सर्वस्व-प्रतिनिधि- -धिः काश्रौ २२,२,२६.
सर्वस्व-हरण- -णम् बौध १, १०,१९.
सर्वस्वा(स्व-अ)पहार- -रः विध ५,१७९.
? सर्वस्वजैनम्[l] कौसू १७,१८.
सर्व-स्वर- -रः पावा ६,१,१८७.
१सर्व-स्वार- > सर्वस्वारिक- -कम् निसू २,६ : ३४; गौपि २, ७,३४.
२सर्व-स्वार[a,m]- -रः शांश्रौ १५,

a) वस.। b) इतच् प्र. उसं. (पा ५,२,३६)। c) पाभे. पृ २५९९ p द्र.। d) पाभे. पृ १७८५ b द्र.। e) परस्परं पाभे.। f) व्यप.। g) = पञ्चरात्र-विशेष-। इदमर्थे वा दृष्टार्थे वा अण् प्र.। h) < सार्वसेनि° इति BW. MW.। i) अपत्यार्थे इञ् प्र.। j) = आयुधजीविसंघविशेष-। k) वैप १ द्र.। l) °स्वा- (= सर्व-स्व-) > -स्वया, एनम् इति PW., °स्वजा ए° इति ?Web. [IS १०,१९], °स्वजः (वस.) ए° इति वा °स्वेन ए° इति वा संस्कर्तुर्मतम्। m) = एकाह-विशेष-।

